Preface from NVKAshraf's Website

http://www.geocities.com/nvkashraf/kur-trans/San-Int.htm

In spite of being an extinct language, scholarship interest in Sanskrit – being a language of revelation – has seen more than 5 translations of Tirukkural. Some of these, however, are not complete translations. Interestingly, while most maiden attempts of translating the Kural into any language has been in prose, this doesn't seem to be the case with Sanskrit. The attempt has been invariably to come out with one in Sanskrit *slokas*. Historically Sanskrit literature has been in verse and it is in verse that its literature has gained renown. It should also be remembered that the first ever translation of the Kural into a foreign language was in Latin, another language no longer in speech.

The translation of S.N. Sriramadesikan who published Tirukkural translation in 1961 and 1978 has been presented here. . There is a website solely devoted to this great Sanskrit scholar who was born in Kanchipuram in 1921. He is recipient of great honours from governmental and non-governmental organizations. He has not only translated Thirukkural into Sanskrit but many other Tamil classics like *Ettuthogai* (Eight Anthologies), *Pathupāttu* (Ten Idylls), *Silappadikāram*, *Thiuppāvai*, *Kambarāmāyanam*, *Nāladiyār* etc. (see: http://sriramadesikan.com/). Thanks to Dr. Thirumurugan, the veterinarian working at Chennai, with whose help I could obtain a CD containing the entire translation. And my wife, K.T. Shahnaz, as usual took all the pains to type the verses in Unicode.

# तिरुक्कुरळ् - संस्कृतानुवाद

# भाग–१: धर्मकाण्ड:

## १. उपोद्घात:

### अधिकार १. ईश्वरवन्दनम्

| | |
|---|---|
| १ | अकारादेव निर्यान्ति समस्तान्यक्षराणि च ।<br>चराचरप्रपञ्चोऽय मीश्वरादेव जायते ॥ |
| २ | ईशस्य ज्ञानरूपस्य विना पादनिषेवणम् ।<br>सन्त्वधीतानि शास्त्रणि न तैरस्ति प्रयोजनम ॥ |
| ३ | भक्तानां मानसाम्भोजवासिने जगदीशितु: ।<br>भजतां पादयुगलं जायन्ते नित्यसम्पद ॥ |
| ४ | दयालो: सर्वमित्रस्य शरणागत् सक्षिण: ।<br>नमतां पादयुगलं न स्याद् दु:खं कदाचन ॥ |
| ५ | माहात्म्यमप्रमेयस्य ज्ञात्वा तं भजतां नृणाम् ।<br>अज्ञानमूलकं कर्म द्विविधं चापि नश्यति ॥ |
| ६ | पञ्चेन्द्रियाणि संमृश्य तान्यर्थोभ्यो निवर्तयन् ।<br>ईश्वरोक्तेन मार्गेण गच्छन् नित्यसुखी भवेत् ॥ |
| ७ | ईशं निरुपमं नित्यं यो वै शरणमाश्रित: ।<br>स एवदु:खरहितो नित्यं सुखमिहाश्नुते ॥ |
| ८ | धर्मसिन्धो: दयामृतें: नावं चरणरूपिणीम् ।<br>अलब्ध्वा दु:खजलधे: पारं गन्तुं न शक्यते ॥ |
| ९ | गुणाष्टकयुतेशस्य पदे येन न वन्दिते ।<br>दृष्टया विरहितं चक्षुरिव तस्य शिरो वृथा ॥ |
| १० | नावं भगवत: पादरूपिणीं प्राप्नुवन्ति ये ।<br>ते तरन्ति भवाम्भोधिमितरैस्तर्तुमक्षमम् ॥ |

## अधिकार २ . वृष्टिमहिमा

| | |
|---|---|
| ११ | लोकोऽयं जीवति सदा यतो वर्षेण् हेतुना ।<br>लोकस्थितिकरं वर्षे ततोऽमृतमिदं विदु: ॥ |

| | |
|---|---|
| १२ | आहारापेक्षलोकस्य भोज्यं धान्यादिकं बहु ।<br>उत्पाथ पेयतामेति स्वयं वर्षे जलात्मना ॥ |
| १३ | चतुर्भि: सागरै: देशे व्याप्तेपि क्षुदियं स्थिता ।<br>प्राणिनो बाधते मेघे यथाकालमवर्षति ॥ |
| १४ | नष्टायां वर्षसंपत्तौ धान्योत्पादनतत्परा: ।<br>लाङ्गलेन भुवं नैव कर्षयेयु: कृषीवला: ॥ |
| १५ | वर्षे त्ववर्षत् जगतीं नाशयित्वा कदाचन् ।<br>अथ स्वयमनावृष्टि बाधितामपि रक्षति ॥ |
| १६ | जलानां बिन्दवो मेघात् न पतेयुर्यदि क्षितौ ।<br>लोके द्रष्टुं न शक्यन्ते हरितास्तृणसम्पद: ॥ |
| १७ | पीत्वा जलनिधिं लोके यदि मेघो न वर्षति ।<br>अगाघोऽप्युदधिस्तेन समृद्धिरहितो भवेत् ॥ |
| १८ | देवताराधनं नित्यं विशेषादुत्सवादिकम् ।<br>लोके नैव प्रवर्तेत मेघो यदि न वर्षति ॥ |
| १९ | परार्थमिह यद्दानमात्मार्थश्चेह यत् तप: ।<br>अभयं न भवेल्लोके यदि देवो न वर्षति ॥ |
| २० | जलाभावे लोकयात्रा सर्वेषामेव देहिनाम् ।<br>न स्यात्; वर्ष विना नैतत्; सदाचारादिकं तथा ॥ |

## अधिकार ३. यतिवैभवम्

| | |
|---|---|
| | |
| २१ | संन्यासिनां सदाचारशीलानां विदितात्मनाम् ।<br>आमनन्ति समे ग्रन्था: मान्या माहात्म्यमुत्तमम् ॥ |
| २२ | निराशस्य मुने: श्रैष्ठयगणनं 'जीवयकोटय: । |

| | |
|---|---|
| | कति जाता मृताश्चे'ति गणनेन समं भवेत् ॥ |
| २३ | विज्ञाय मोक्षभवयो: संभवं सुखदु:खयो: ।<br>संन्यासं भजतां मुक्त्यै प्रभावो बहुमन्यते ॥ |
| २४ | धैर्याङ्कुशेन् संयम्य गजान् पञ्चेन्द्रियात्मकान् ।<br>य: पालयत्ययं मोक्षफलकृद्बीजवद्भवेत् ॥ |
| २५ | आशापञ्चकमुक्तस्य गीयते शक्तिरुत्तमा ।<br>गौतमादात्तशापोऽत्र देवराजो निदर्शनम् ॥ |
| २६ | सर्वेन्द्रियजयाख्यानं कर्मान्यैर्दुष्करं जनै: ।<br>ये कुर्वन्त्युत्तमास्ते स्यु: अन्येत्वधम मध्यमा: ॥ |
| २७ | रूपगान्धरसादीनां तन्मात्राणां विधां भुवि ।<br>जानाति य: प्रपञ्चोऽयं वशे तस्य भविष्यति ॥ |
| २८ | यतोक्तधर्मनिष्ठानां यतीनां महिमादिकम् ।<br>मन्त्रादि सहितैर्वेदवाक्यैरेव निरूप्यते ॥ |
| २९ | गुणपर्वतमारूढा: मुनय: कुपिता यदि ।<br>क्षणिकोऽपि स दुर्वारफल:शान्तिप्रसादने ॥ |
| ३० | सर्वभूतदयासान्द्रा: ये तु धर्मपरायणा: ।<br>त एव ब्राह्मणा: प्रोक्ता: यतय: संशितव्रता ॥ |

## अधिकार ४. धर्मवैशिष्टयम्

| | |
|---|---|
| | |
| ३१ | धर्मात् सञ्जायते कीर्ति: धर्मादुत्पघते धनम् ।<br>धर्मादप्यधिकं वस्तु प्राणिनां किं नु घर्तते ॥ |
| ३२ | धर्मानुष्ठानविभवात् देहिनां आयते सुखम् ।<br>धर्माणामननुष्ठानादनिष्ठं संभवेदिह ॥ |

| | |
|---|---|
| ३३ | मनोवाक्कायकरणै: धर्मकार्ये यथाविधि ।<br>कर्तव्यं ख्यात् यथाशक्ति समयस्यानुरोधत: ॥ |
| ३४ | यत् कृतं शुद्धमनसा स धर्म इति कथ्यते ।<br>हच्छुद्धिरहितं कर्म केवलाडम्बरार्थकम् ॥ |
| ३५ | क्रोधो लोभ: कठोरोक्तिरसूयेति चतुर्विधान् ।<br>दोषान् विना कृतं कार्ये धर्म इत्युच्यते बुधै: ॥ |
| ३६ | पश्चादिति भतिं त्यक्त्वा बाल्ये धर्मे वितन्वत: ।<br>स धर्मो मृत्युकाले ऽपि स्थित: साह्यकरो भवेत् ॥ |
| ३७ | शिबिकावाहकं हष्टवा तत्रत्यश्च समक्षत: ।<br>धर्मप्रभावे सुज्ञेये कुत: शास्त्रं कुत: श्रुति: ॥ |
| ३८ | अनुस्यूततया धर्मकार्ये जन्मनि यत् कृतम् ।<br>तत् पुनर्जन्ममार्गस्य निरोधकशिलायते ॥ |
| ३९ | यल्लब्धं धर्ममार्गेण तदेव सुखमिष्यते ।<br>अधर्माद्विस्तु यत् प्राप्तं न सा कीर्ति र्न तत् सुखम् ॥ |
| ४० | सत्कर्मैव सदा कार्यम् सर्वयत्नेन मानवै: ।<br>अपवादकरं चान्यत् वर्जनीयतयोच्यते ॥ |

## अधिकार् ५. गार्हस्थ्यम्

| | |
|---|---|
| | |
| ४१ | त्रयाणामपि वर्णानां स्वधर्ममनुतिष्ठताम् ।<br>गृहस्थो धर्मनिरतो नित्यं साह्यकरो मत: ॥ |
| ४२ | यतीन् मृतान् दरिद्रांश्च निर्गतीन् अतिथीनपि ।<br>गृहस्थोऽन्नादिदानेन स्वाश्रितानपि रक्षति ॥ |

| | |
|---|---|
| ४३ | पितृदेवातिथीनां च बन्धूनामात्मनस्तथा ।<br>सत्कृतिर्धर्ममार्गेण गृहस्थस्य वरा मता ॥ |
| ४४ | अपवादभयाद्वित्तं सम्पाद्य सकलै: सह ।<br>भुञ्जानस्य गृहस्थास्य निर्दुष्टं जीवनं भवेत् ॥ |
| ४५ | गार्हस्थ्यजीवनं यत् स्यात् स्नेहधर्मसमन्वितम् ।<br>तदेव सार्थकं लोके तद्धि गार्हस्थ्यमुच्यते ॥ |
| ४६ | गार्हस्थ्यजीवनं येन धर्म्यें मार्गें प्रवर्त्येते ।<br>किं वा प्रयोजनं तस्य वानप्रस्थादिना पथा ॥ |
| ४७ | धर्मेण वर्त्मना यस्तु गार्हस्थ्य मुपसेवते ।<br>मार्गन्तरोपजीविभ्य: स प्रशस्तो निगद्यते ॥ |
| ४८ | कारयित्वा परैर्धर्मे धर्ममार्गाबलम्बिन: ।<br>जीवनं च गृगस्थस्य श्लाघ्यते यतिजीवनात् ॥ |
| ४९ | स एव धर्मशब्दार्थो यद्धि गार्हस्थ्यजीवनम् ।<br>गृहस्थधर्म एवात्र धर्मशब्देन कथ्यते ॥ |
| ५० | धर्ममार्गमनुल्लङ्घय गृहस्थो यदि जीवति ।<br>देववत्पूजित: सोऽत्र देवलोकं ततो व्रजेत् ॥ |

## अध्कार् ६. पत्नी

| | |
|---|---|
| | |
| ५१ | दयादिगुणसम्पन्ना भर्तुरायानुसारत: ।<br>करोति जीवनं याऽत्र सैव भार्येति कथ्यते ॥ |
| ५२ | गृहिणी यस्य गार्हस्थ्यगुणादिरहिता भवेत् ।<br>निष्फलं जीवनं तस्य सत्स्वेव विभवादिषु ॥ |

| | |
|---|---|
| ५३ | पत्नी चेद् गुणसम्पन्ना समृद्धं तस्य जीवनम् ।<br>वैपरीत्ये समायाते शून्यमेव हि जीवनम् ॥ |
| ५४ | पातिव्रत्येन संपन्ना गृहिणी यदि सङ्गता<br>तस्मादज्युत्तं भाग्यं गृहस्थास्य न लभ्यते ॥ |
| ५५ | पतिमेव हरिं मत्वा प्रातर्या भजते ऽन्वहम् ।<br>त्वं वर्षेति तंयाऽऽशप्तो देवोपि किल वर्षति ॥ |
| ५६ | पातिव्रत्येन् भर्तारमात्मानं कीर्तिमेव च ।<br>या पालयति धर्मेण सैव नारीति कथ्यते ॥ |
| ५७ | दण्डनाद्यैस्तु नारीणां रक्षणे किं प्रयोजनम् ।<br>पातिव्रत्यात् स्वत: स्त्रीणामात्मरक्षणमुत्तमम् ॥ |
| ५८ | पातिव्रत्येनसहितां पतिशुश्रूषणे रताम् ।<br>गृहस्था गृहिणीं प्राप्य स्वर्गलोकं भजन्ति हे ॥ |
| ५९ | पातिव्रत्ययशोहीनां भार्यां यो लभते नर: ।<br>सगार्वे सिंहवत् सो ऽयं शत्रुमध्ये न गच्छति ॥ |
| ६० | सच्चरित्रवती भार्या माङ्गल्यं जीवितस्य सा ।<br>सत्पुत्राणामवाप्तितस्तु ततो भूषणवद्भवेत् ॥ |

## अधिकार् 7. पुत्रभाग्यम्

| | |
|---|---|
| | |
| ६१ | शास्त्रानुगतबुद्धीनां पुत्राणां लाभ एव तु ।<br>लव्धव्येषु महद्भाग्यम् अन्यन्नेह प्रशस्यते ॥ |
| ६२ | निर्दुष्टगुणसम्पन्नं पुत्रं प्राप्नोति यो नर: ।<br>दु:खानि तं न बाधन्ते भाविजन्मसु सप्तसु ॥ |

| | |
|---|---|
| ६३ | तनयेन पितु: स्वर्गलोकार्थे दानकारणात् ।<br>पुत्रं स्वार्जितवित्तेन समं वै मन्यते पिता ॥ |
| ६४ | दत्तं यत् पुत्र हस्तेन सामान्यमपि भोजनम् ।<br>अमृतादधिकं तत्तु वर्तते मधुरं पितु: ॥ |
| ६५ | पुत्रदेहपरिष्वङ्गो देहानन्दं विवर्धयेत् ।<br>जनयेच्छ्रवणानन्दं तेषां स्खलितभाषितम् ॥ |
| ६६ | अस्पष्टमधुरं पुत्रभाषितं श्रृणोति य: ।<br>स एव कथयेत् रम्यं वीणावेण्वादि वादितम् ॥ |
| ६७ | पिता विद्याप्रदानेन पण्डिताग्रेसरं सुतम् ।<br>यदि कुर्यात्सुतस्यैतत् महत् साह्यमुदीर्यते ॥ |
| ६८ | विद्यावन्तं सुतं दृष्टवा मोदते न पिता परम् ।<br>अधिकं तेन तुष्यन्ति सर्वे भूतलवासिन: ॥ |
| ६९ | 'पुत्रस्ते गुणवान् विद्वान्' इति वाक्यं महात्मनाम् ।<br>श्रुत्वैव **ज**ननी तस्य जननादपि तुष्यति ॥ |
| ७० | किंवा तप: कृतं पित्रा प्राप्तुमेतादृरां सुतम् ।<br>इति लोकै: स्तुत्: पुत्र: पितु: स्यादुपकारक: |

## अधिकार् ९. प्रीति:

| | |
|---|---|
| | |
| ७१ | अर्गलं नास्ति हि प्रीते: प्रीतानामश्रुबिन्दव: ।<br>प्रकाशयन्ति सर्वेषां प्रीतिमन्त:स्थितामपि ॥ |
| ७२ | नर: प्रेम्णा विरहित्: सर्वमात्मार्थमिच्छति ।<br>प्रेमवान् स्वशरीरं च परार्थमिति मन्यते ॥ |

| | |
|---|---|
| ७३ | सर्वत्र प्रियभावेन कुर्वन् जीवनमात्मन: ।<br>जीवस्य देहसम्बन्धफलं पूर्णमिहाश्नुते ॥ |
| ७४ | करुते स्वजनप्रेम सव सौहार्दजीवनम् ।<br>तदेव वर्धयेत् स्नेहमधिकं सर्वजन्तुषु ॥ |
| ७५ | प्रेमार्द्रहृदयो यस्तु वर्तसे स्वीयबन्धुषु ।<br>सोऽत्र कीर्ति सुखं चैत्य स्वर्गलोके सुखं वसेत् ॥ |
| ७६ | साधनं धर्ममात्रस्य प्रेमेति कथनं वृथा ।<br>अधर्मवर्जनेऽप्येतत् साधनं वस्तुतत्त्वत: ॥ |
| ७७ | निरस्थिकान् कीटगणान् आतपो बाघते यथा ।<br>जीवं प्रेम्णा विरहितं तथा धर्मोपि बाघते ॥ |
| ७८ | महीरुहस्य शुष्कस्य मरौ पल्लवजन्मवत् ।<br>गृहेषु हृदये प्रेम् विना जीवन् मुच्यते ॥ |
| ७९ | देहान्तरङ्गभूतेन प्रेम्णा र्हितदेहिनाम् ।<br>बाहयाङ्गसामवायेन फलं नैव भवेद् ध्रुवम् ॥ |
| ८० | स देहो जीवसहित्: य: प्रेमवशमागत: ।<br>चर्मावृतास्थिकूट:स्यात् प्रेम्णा विरहितस्तु य: ॥ |

## अधिकार ९. अतिथिसत्कार:

| | |
|---|---|
| | |
| ८१ | सम्भारा: सम्भ्रियन्ते ये गृहस्थाश्रमवासिना ।<br>सर्वे ते विनियोक्तव्या: सदैवातिथिपूजने ॥ |
| ८२ | प्रियातिथिमसम्मान्य गृहे यद्वस्तु भुज्यते ।<br>साक्षादमृतमेवास्तु न तच्छ्लाघ्यं कदाचन ॥ |

| | |
|---|---|
| ८३ | स्वगृहप्राप्तमतिथिं भक्त्या सत्कुर्वत: सदा ।<br>दारिद्र्यम् न भवेत् किन्तु धनं चाप्यभिवर्धते ॥ |
| ८४ | शुद्धातिथिं वेश्म गतं सेवमानस्य सादरम्  ।<br>नरस्य गेहे वसति प्रसन्ना पद्मसम्भवा  ॥ |
| ८५ | भोजयित्वा ऽतिथिं पूर्वे शिष्टं स्वीकृत्य जीवत् ।<br>बीजावापं विना क्षेत्रे जातन्ते सस्यसम्पद: ॥ |
| ८६ | तोषयित्वा ऽतिथिं प्राप्तमन्यान् अतिथिसत्तमान् ।<br>यो हि प्रतीक्षते सोऽयं देवानामतिथिर्भवेत् ॥ |
| ८७ | सदाराधनयज्ञस्य फलं वाचामगोचरम् ।<br>अतिथेर्योग्यता भेदात् फलमेदो ऽपि सम्मत् ॥ |
| ८८ | यस्यातिथीनां सत्कारयज्ञे बुद्धिर्न जायते ।<br>लब्धं वस्तु परिभ्रष्टं भवेदिति स चिन्तयेत् ॥ |
| ८९ | दरिद्र एव मन्तव्यो वित्ते सत्यपि पुष्कले ।<br>भातिथ्यदानविमुखो यो भवेद् भुवने जड: ॥ |
| ९० | शिरीषपुष्पमाघ्राणात् म्लानं संजायते यथा ।<br>तथाऽतिथीनां वदनं स्याद् गृहस्थे पराङ्मुखे ॥ |

## अधिकार १०. मधुरालाप:

| | |
|---|---|
| | |
| ९१ | यत् कथ्यते धर्मविद्भि: सदयं प्रेमपूर्वकम् ।<br>वञ्चनारहितं तत्तु भवेन्मधुरभाषणम् ॥ |
| ९२ | सहर्षे च दरिद्रेभ्य: कृतात् दानादनिन्दितात् ।<br>प्रसन्नवदनस्यैतत् श्रेष्ठं मधुरभाषणम् ॥ |

| | |
|---|---|
| ९३ | दृष्ट्वा प्रसन्नमधुरं यद्वै हृदयपूर्वकम् ।<br>उच्यते सुहितं सत्यं स धर्मः परमो मतः ॥ |
| ९४ | सर्वत्र मधुरं वाक्यं प्रयुक्तं सुखवर्धकम् ।<br>सर्वदा दुःखजनकं दारिद्र्यमपि नाशयेत् ॥ |
| ९५ | विनयो मधुरालापः द्वयमाभरणं नृणाम् ।<br>ताभ्यां द्वाभ्यां विहीनस्य किमन्यैर्भूषणैः फलम् ॥ |
| ९६ | अन्येषामुपकारार्थे यो ब्रूते मधुरं वचः ।<br>तस्य पपानि नश्यन्ति धर्म एवाभिवर्धते ॥ |
| ९७ | परोपकारजनकं माधुर्यसाहितं वचः ।<br>वक्तारं सुखिनं कृत्वा पुण्यं चापि प्रयच्छति ॥ |
| ९८ | परदुःखाय या न स्युः प्रयुक्ता मधुरोक्तयः ।<br>ऐहिकामुष्मिकं सौख्यं प्रयोक्तुर्वितरन्ति ताः ॥ |
| ९९ | मधुरोक्त्या महत् सौख्यं भवेदिति विदन्नपि ।<br>दुःखदं कठिनं वाक्यं कुतो वा वक्ति मानवः ॥ |
| १०० | कथनं कठिनोक्तीनां मधुरे वचसि स्थिते ।<br>मधुरं फलमुत्सृज्य कषायस्याशनं भवेत् ॥ |

## अधिकार ११. कृतज्ञता

| | |
|---|---|
| १०१ | अस्माभिरकृते साह्ये यस्तु साहय्यं करोति नः ।<br>लोकद्वयप्रदानेऽपि तस्य नास्ति प्रतिक्रिया ॥ |
| १०२ | समये रचितं साहय्यं स्वल्पं स्यात् परिमाणतः ।<br>तदेव कालमेदेन् महत् स्याद् भुवनादपि ॥ |
| १०३ | अनालोच्य प्रतिफलं साहय्यं प्रेम्णा विनिर्मितम् ।<br>विमृष्ट सत् समुद्रादप्यधिकं स्यान्न संशयः ॥ |

| | |
|---|---|
| १०४ | स्वल्पं यवसं साह्यं विमृश्य बहु लाभदम् ।<br>तालवृक्षादपि महत् तन्मन्यन्ते नरोत्तमा: ॥ |
| १०५ | कृते च प्रतिकर्तव्यं स्वीयशक्तयनुसारत: ।<br>प्राप्तलाभानुसारेण प्रतिकारो विगर्ह्यते ॥ |
| १०६ | ज्ञानाचारसमेयानां सम्बन्धं नैव विस्मरेत् ।<br>आपत्सहायभूतनां मैत्रीं नैव परित्यजेत् ॥ |
| १०७ | कष्टकाले समायाते उपकुर्वन्ति ये नरा: ।<br>सन्त: स्मरन्ति तन्मैत्रीं सप्तसप्तसु जन्मसु ॥ |
| १०८ | कृतानामुपकाराणामधर्मे विस्मृतिर्भवेत् ।<br>विस्मृतिस्त्वपकाराणां सद्यो धर्म: स कथ्यते ॥ |
| १०९ | उपकृत्य प्रथमत: मरणान्तकरा यदि ।<br>उपकारा अपि कृता: लीयन्ते तत्र चैव ते ॥ |
| ११० | धर्मान्तरविहीनानां विद्यते पापमोचनम् ।<br>कृतज्ञताधर्महीने नास्ति वै पापमोक्षणम् ॥ |

## अधिकार १२. ताटस्थ्यम्

| | |
|---|---|
| १११ | शत्रुमित्रतृतीयेषु न्यायमार्गानुसारिण: ।<br>निष्पक्षपाततारूपो धर्मे योऽस्य फलं भवेत् ॥ |
| ११२ | निष्पक्षपातिनो वित्तं न तु केवलमात्मन: ।<br>स्थिरं सत्पुत्रपौत्रादि सन्तते: स्यात् सुखावहम् ॥ |
| ११३ | पक्षपातार्जितं वित्तं सुखं नैव प्रयच्छति ।<br>कदाचित् सुखदं भायादथापि परिवर्जयेत् ॥ |
| ११४ | अयं माध्यस्थ्यवर्तीति विपरीतोऽयमित्यपि ।<br>सदसत्पुत्रजन्मभ्यां ज्ञातुं शक्यं विशेषत: ॥ |
| ११५ | सुखदु:खे हि संसारे कर्माधीने भविष्यत: । |

| | |
|---|---|
| | अतो मध्यस्थवृत्तिः स्यात् श्रेष्ठमाभरणं सताम् ॥ |
| ११६ | हृदयं पक्षपातेन यदि पापं विचिन्तयेत् ।<br>तदुत्पात इति ज्ञेयं भाविनाशस्य मूचकम् ॥ |
| ११७ | निष्पक्षपातिनो धर्मशीलस्य समुपागतम् ।<br>दारिद्र्यमपि मन्यन्ते भाग्यमेव मनीषिणः ॥ |
| ११८ | मध्ये स्थिता तुला द्रव्यं न्यायतस्तुलयेद्यथा ।<br>तथा निष्पक्षपातित्वं माध्यस्थं लक्षणं सताम् ॥ |
| ११९ | पक्षपातं विना चित्तं मध्यस्थं च भवेद्यति ।<br>वाचि मध्यस्थभावोऽपि तदा नूनं भविष्यति ॥ |
| १२० | अन्येषामपि वस्तूनि स्वकीयानीव पश्यता ।<br>क्रियते यत्तु वाणिज्यं तद्वाणिज्यमितीर्यते ॥ |

## अधिकार १३. निग्रहशीलता

| | |
|---|---|
| १२१ | तनोति निग्रहो मर्त्यमुत्तं देवपूजितं ।<br>अनिग्रहो नरं घोरे नरके पतयत्यपि ॥ |
| १२२ | निग्रहः शाश्वतं वित्तमिति तत् पालयेत् सदा ।<br>निग्रहादधिकं श्रेयो मानवानं न विद्यते ॥ |
| १२३ | ज्ञातव्यं तत्वतो ज्ञात्वा संयमी यो भवेन्नरः ।<br>महात्मनां गुणाज्ञानां कृपया स सुखी वसेत् ॥ |
| १२४ | सदा निग्रहशीलो यः स्वीयमार्गावलम्बिनः ।<br>महोन्नता स्थिति स्तस्य शैलादप्यधिका भवेत् ॥ |
| १२५ | सदा निग्रहशीलत्वं सर्वेषामुत्तं मतम् ।<br>तेषु चाप्यग्रगण्यस्य तद्भवेदधिकं धनम् ॥ |
| १२६ | पञ्चेन्द्रियाणि सम्यम्य विद्यमानस्य कर्मवत् ।<br>आत्मरक्षणशक्तिः स्यात् सप्तस्वपि च जन्मसु ॥ |

| | |
|---|---|
| १२७ | निरोद्धव्येषु बहुषु जिह्वां वा रोध्दुमर्हति ।<br>अन्यथा शब्ददोषेण जायते दु:खभाजनम् ॥ |
| १२८ | शक्तवा कुशब्दं योऽन्यस्य कुरुते मनसो व्यथाम् ।<br>तात्कृताश्चान्यधर्मा: स्युरनिष्टफलदायका: ॥ |
| १२९ | वह्निज: स्यात् व्रणा: शान्त: चिह्नमात्रं न शाम्यति ।<br>वागग्निजव्रणस्येह नैवोपशमनं भवेत् ॥ |
| १३० | अक्रोध: संयमी यस्तु विद्यया च निषेवित: ।<br>स्वत् एव समागम्य तं रक्षेद्धर्मदेवता ॥ |

## अधिकार १४. सदाचारसम्पत्ति:

| | |
|---|---|
| १३१ | सदाचारो मनुष्याणां सर्वश्रेयांसि यच्छति ।<br>प्राणेभ्योपि सदाचार: श्रेष्ठ इत्येव पालयेत् ॥ |
| १३२ | प्रेम्णा परिश्रमेणापि सदाचारं तु पालयेत् ।<br>सर्वधर्मे सदाचार: श्रेष्ठो जीवितसाह्याद: ॥ |
| १३३ | य: सदाचारसम्पन्न: स कुलीन इतीर्यते ।<br>य: सदाचाररहितस्त्वकुलीन: स गण्यते ॥ |
| १३४ | अधीतविस्मृतं वेदं प्राप्नोति पठनात् पुन: ।<br>विप्रो नषकुलाचार: पुनर्नाप्नोति विप्रताम् ॥ |
| १३५ | असूयाविष्टमनुजो यथा वित्तं न विन्दति ।<br>तथा कुलाचारहीनो लभते न समुन्नतिम् ॥ |
| १३६ | धीरा: सदाचारहानात् दृष्ट्वा नीचकुलोद्भवम् ।<br>न मुञ्चन्ति सदाचारं दुस्साधमपि सर्वदा ॥ |
| १३७ | सदाचारेण सर्वेऽपि लभन्ते परमं यश: ।<br>सदाचारपरित्यागादपवादो मुधा भवेत् ॥ |
| १३८ | उपयोर्लौकियो: सौख्यं सदाचारेण जायते । |

| | |
|---|---|
| | तथा दु:ख दुराचारात् प्राप्यते लोकयोर्द्वयो: ॥ |
| १३९ | दोषयुक्तानि वाक्यानि विस्मृत्यापि प्रमादत: ।<br>तेषां मुखान्न निर्यान्ति ये सदाचारशालिन: ॥ |
| १४० | ये तु नैव प्रवर्तन्ते कालदेशानुसारत्: ।<br>अधीतेष्वपि शास्त्रेषु ज्ञानिनो न भवन्ति ते ॥ |

## अधिकार् १५. परदारपराङ्मुखता

| | |
|---|---|
| १४१ | परपत्नीसङ्गमेच्छादोषस्तेषु न विद्यते ।<br>धर्मार्थशास्त्र तत्वज्ञा ये भवन्ति महीतले ॥ |
| १४२ | परपत्नीलम्पटनां मध्ये मृढतमो हि स: ।<br>परदार गृहद्वारे कामार्तो य: प्रतीक्षते ॥ |
| १४३ | जीवन्नपि मृतप्राय: स तु संशय मन्तरा ।<br>विश्वस्तसुहृद: पत्नीं यो भोक्तुमभिवाञ्छति ॥ |
| १४४ | पापं किञ्चिदनालोच्य परनारीरतात्मन: ।<br>किमन्यै र्विभवै: पूर्णै: स दु:खान्न विमुच्यते ॥ |
| १४५ | सर्वसाधारणं मत्वा सङ्गत: परवल्लभाम् ।<br>अपवादं स्थिरं धत्ते गर्हितं तत्कुलं भवेत् ॥ |
| १४६ | अपवादो भयं पापं द्वेषश्चेति चतुर्विधा: ।<br>दोषा नैनं विमुञ्चन्ति योऽन्यभार्यां निषेवते ॥ |
| १४७ | धर्म मार्गेण गार्हस्थ्यसेवनेनेह जीवत: ।<br>अन्यदीयेषु दारेषु मतिरेव न जायते ॥ |
| १४८ | परस्त्रीदर्शने चित्तदार्ढ्यं यद्र विद्यते सताम् ।<br>नेदं तेषां धर्ममात्रं पूर्णाचारोऽपि स स्मृत: ॥ |
| १४९ | घोराम्मोधि वृते ऽप्यस्मिन् लोके ते श्नुवते सुखम् । |

| | |
|---|---|
| | पराङ्गनापरिष्वङ्गं कामार्ता ये न कुर्वते ॥ |
| १५० | त्यक्त्वा धर्म मधर्मणां कर्ता चापि विशेषत: ।<br>श्लाघ्य एव भवेदत्र परस्त्रीविमुखो यदि ॥ |

## अधिकार १६. क्षमा

| | |
|---|---|
| १५१ | धारणात् खनकस्यापि धरण्या इव नि:समा ।<br>स्वापराधिषु या क्षान्ति: स धर्म: परमो नृणाम् ॥ |
| १५२ | अपकार: परकृत: सोढव्य: सर्वदा नरै: ।<br>विस्मर्ता त्वपकारणां ततो भुवि महीयते ॥ |
| १५३ | दरिद्रेषु दरिद्र: स्यात् भ्रष्टस्त्वतिथिपूजनात् ।<br>मूढनिन्दा सहिष्णुस्तु समर्थेषूत्तमो भवेत् ॥ |
| १५४ | आत्मनो गुणसम्पत्त्या विख्यातिं यश्चिकीर्षति ।<br>तेन क्षमावता भाव्यमपराधिजनेष्वपि ॥ |
| १५५ | शत्रूणामपकर्तारं सन्तो न बहुकुर्वते ।<br>अरिष्वपि क्षमावन्तं स्वर्णवत् हृदि कुर्वते ॥ |
| १५६ | विरोधिष्वपकर्तृणां तिष्ठेदेकदिनं सुखम् ।<br>परद्रोहसहिष्णूनं यावज्जीवं भवद्यश: ॥ |
| १५७ | परैरनर्थात् विहितात् लब्ध्वापि मनसो व्यथाम् ।<br>अधर्माचरणाश्चित्त निरोधो हि प्रशस्यते ॥ |
| १५८ | कुर्वतामात्मनो द्रोहं मनोऽहङ्कार करणात् ।<br>अकृत्वैव प्रतीकारं जेतव्या: क्षमयैव ते ॥ |
| १५९ | मर्यादां समतिक्रम्य निन्दकान् कठिनोक्तिभि: ।<br>क्षमया ये सहन्तेऽत्र शुद्धास्ते मुनिभि: समा: ॥ |
| १६० | महानेव स मन्तव्य: विनाऽन्नं यस्तपस्यति । |

| | |
|---|---|
| | परनिन्दासहिष्णुस्तु ततोऽपि स्यान्महत्तर: |

## अधिकार १७. अनसूयता

| | |
|---|---|
| १६१ | असूयाहीनचित्तेन सन्मार्गैक प्रवर्तिना ।<br>अनसूया रक्षणीया सदाचारसमा सदा ॥ |
| १६२ | असूया यस्य न भवेत् सर्वदा सर्वजन्तुषु ।<br>स एव भग्यवान् लोके सर्वभाग्येषु तद्वरम् ॥ |
| १६३ | परोत्कर्षमसोढ्वैव यस्त्वसूयापरो भवेत् ।<br>इह वित्तं परे पुण्यमुभयं तस्य हीयते ॥ |
| १६४ | असूयया भवेद्दु:खमिति मत्वा मनीषिण: ।<br>अधर्मे नैव कुर्वन्ति ह्यसूयावशमागता: ॥ |
| १६५ | असूयया सम: शत्रुर्वर्तते न महीतले ।<br>रिपौ कदाचिच्छान्तेऽपि नूनं सा कुरुते व्यथाम् ॥ |
| १६६ | यो वै न सहतेऽन्यस्य विभवं समुपागतम् ।<br>बन्धवास्तस्य नश्यन्ति वस्त्राहारविवर्जिता: ॥ |
| १६७ | दृष्ट्वा नरमसूयाढ्यं मन्युना सहिता रमा ।<br>ददाति तस्य दारिद्र्यम् स्वयं चापि विमुञ्चति ॥ |
| १६८ | असूयया सम: पापी विद्यते नैव भूतले ।<br>भाग्यं सर्वे नाशयित्वा कुपथे च नयेन्नरम् ॥ |
| १६९ | असूयासहिते भाग्यं दारिद्र्य सज्जनेष्वपि ।<br>यदि स्यात् कारणं तत्र कि स्यादिति विचार्यताम् ॥ |
| १७० | असूयावान्नरो लोके न प्राप्नोति समुन्नतिम् ।<br>असूयया विरहितं न जहात्युन्नतिर्नरम् ॥ |

# अधिकार् १८. अलोभ:

१७१ अधर्मादन्यावस्तूनि यो ऽपहर्तुमभीच्छति ।
कुलनाशं स भजते दोषा अपि भजन्ति तम् ॥

१७२ अन्यायाल्लज्जिता मर्त्या लोभेन परवस्तुषु ।
स्वल्पलाभमभीप्सन्त: निषिद्धं नैव कुर्वते ॥

१७३ न्यायमार्गागतं नित्यसुखं यै: प्रार्थते नर: ।
अल्पसौख्यात् न ते कुर्यु: लोभमन्येष्वधार्मिकम् ॥

१७४ जित्वा पञ्चेन्द्रियग्रामं तत्वज्ञानसमन्विता: ।
ज्ञात्वापि स्वक दारिद्र्यमलुब्धा: परवस्तुषु ॥

१७५ परद्रव्यापहारार्थे निन्दितं कर्म कुर्वत: ।
सूक्ष्मेण शास्त्रज्ञानेन विद्यते किं प्रयोजनम् ॥

१७६ सर्वभूतदयापूर्वे गार्हस्थ्यमनुतिष्ठत:
परवस्तुप्रलोभेन गार्हस्थ्यमपि निष्फलम् ॥

१७७ परद्रव्यापहारेण लब्धं वस्तु परित्यजेत् ।
फलप्रदानवेलायां न तच्छ्रेय: प्रदास्यति ॥

१७८ यो ऽन्यदीयं वस्तुजातमपहर्तु न काङ्क्षति ।
न क्षीयते तस्य भाग्यं भूय एवाभिवर्धते ॥

१७९ परद्रव्येष्वलुब्धा ये ज्ञानिनो धर्मवित्तमा: ।
तानू वासयोग्यान् विज्ञाय तेष्वेव रमते रमा ॥

१८० परिणाममनालोच्य परलुब्धो विनश्यति ।
अलुब्धो यस्तु वर्तेत राजते स जयी भुवि ॥

# अधिकार १९. परोक्षनिन्दावर्जनम्

| | |
|---|---|
| | |
| १८१ | अप्यनुक्त्वा धर्मशब्दमधर्माचार तत्पर: ।<br>परोक्षनिन्दादोषेण रहितश्चेत् प्रशस्यते ॥ |
| १८२ | परोक्षे दूषयित्वा या प्रत्यक्षे कपटस्तुति: ।<br>धर्महानेरधर्मस्य करणात् पापदैव सा ॥ |
| १८३ | परोक्षे दूषणादग्रे स्तुत्या यज्जीव्यते मुधा ।<br>ततोऽपि धर्मन्नष्टस्य शास्त्रोक्ता सद्गतिर्भवेत् ॥ |
| १८४ | प्रत्यक्षे दूष्यतां सम्यक् विना दाक्षिण्यमेव वा ।<br>परिणाममनालोच्य परोक्षे न तु दूषयेत् ॥ |
| १८५ | वाचा धर्मे वदेन्नाम मनस्तत्र न विद्यते ।<br>इत्येव स हि मन्तव्य: परोक्षे यस्तु निन्दति ॥ |
| १८६ | यो निन्दति परोक्षेऽन्यं तत्कृतेषु बहुष्वपि ।<br>दोषेषु सारमन्विष्य तमन्यो दूषयेतुर: ॥ |
| १८७ | यो वा मधुरवाक्येन स्नेहमन्यैर्न वर्धयेत् ।<br>परोक्षनिन्दकस्यास्य भजेन्मित्रममित्रताम् ॥ |
| १८८ | विश्वस्तमित्रदोषणां परोक्षे संप्रकाशका: ।<br>उदासीन मनुष्येषु न कुर्यु: किमिवाप्रियम् ॥ |
| १८९ | 'ममास्य भरणं धर्म' इति मत्वा वसुन्धरा ।<br>परोक्षनिन्दासक्तस्य देहभारं विभर्ति किम्? ॥ |
| १९० | परोक्षनिन्दक: स्वीयदोषान् अन्यकृतानिव ।<br>यदि जानाति तं नैव बाधन्ते दु:खराशय: ॥ |
| | |

## अधिकार २०. वृतालापनिषेध

| | |
|---|---|
| १९१ | जुगुप्साजनकं व्यर्थभाषणं जनसंसदि ।<br>प्रयुङ्क्ते यः स सर्वेषां परीहास पदं भवेत् ॥ |
| १९२ | मित्रेष्वनिष्टकरणादपि पण्डित मण्डले ।<br>वृथाप्रलापो विज्ञेयो महानिष्टफलप्रदः ॥ |
| १९३ | अविनीतिपरः सोऽयमिति स्पष्टं प्रतीयते ।<br>निरर्थकानि वाक्यानि ब्रूते यस्तु विशेषतः ॥ |
| १९४ | हीनमर्थगुणाभ्यां यत् वाक्यं सर्वत्र कथ्यते ।<br>नीत्या विरहितं तत्तु नाशयेत् सद्गुणानपि ॥ |
| १९५ | ब्रूयुर्निरर्थकं वाक्यं महास्थानगता यदि ।<br>तदा कीर्तिप्रतिष्ठाभ्यांभवन्ति रहिता अमी ॥ |
| १९६ | निरर्थकानां वाक्यानां प्रयोक्ता यः पुनः पुनः ।<br>न नरः स हि मन्तव्यो ऋजीषं स्यान्नरेष्वयम् ॥ |
| १९७ | अधर्मसहितं वाक्यं महान्तः कथयन्त्वपि ।<br>अप्रयोजकवाक्यानि वर्जनीयानि तैरपि ॥ |
| १९८ | मोक्षाद्युत्तमलाभार्थे मीमांसन्ते मिथस्तु ये ।<br>अल्पलाभकरं वाक्यं न ते ब्रूयुर्मनीषिणः ॥ |
| १९९ | अविद्यारहिताः सन्तः तत्वज्ञानसमन्विताः ।<br>विस्मृत्याप्यर्थविधुरं वाक्यं नैव प्रयुञ्जते ॥ |
| २०० | वाच्यं तदेव वाक्येषु यल्लाभजनकं वचः ।<br>त्याज्यं तदेव वाक्येषु यल्लाभरहितं वचः ॥ |

## अधिकार २१. दुष्कर्मभीति

| | |
|---|---|
| २०१ | दुष्कर्मनिरता लोकाः पापेभ्यो न हि बिम्यति।<br>सत्कर्मनिरता सन्त पापाद्बिभ्यति सर्वदा॥ |
| २०२ | दुष्कर्मणा दुःखमेव यस्मादुत्पद्यते ततः।<br>वह्नेरप्यधिक मत्वा मेतव्यं दुष्टकर्मणः॥ |

| | |
|---|---|
| २०३ | तदात्मक्षेमजनकमुत्तमं ज्ञानमुच्यते।<br>दु:खानुत्पादबुद्धिर्या स्वापराधिजनेष्वपि॥ |
| २०४ | परदु:खप्रदं कर्म प्रमादेनापि न स्मरेत्।<br>अन्यथा स्मरतोऽस्यैव धर्मो नाशं विचिन्तयेत्॥ |
| २०५ | 'अहं दरिद्र' इत्युक्त्वा न कुर्यात्कर्म निन्दितम्।<br>न चेत् दरिद्र एव स्यात् भाविजन्मसु सप्तसु॥ |
| २०६ | 'स्वकृतं दुष्कृतं स्वस्य भाविदु:खप्रदायकम्'।<br>इति चिन्तयताऽन्येषां न कार्या दुष्कृति: सदा॥ |
| २०७ | इतरै: शत्रुभिर्जातु मुच्येतेहापि जन्मनि।<br>दुष्कर्मनामा शत्रुस्तु बाधते भाविजन्मसु॥ |
| २०८ | नरच्छाया यथा तस्य पादाभ्यां सह गच्छति।<br>प्रतिजन्म तथा यान्ती दुष्कृतिर्बाधते नरम्॥ |
| २०९ | विना दु:खं सदा यो वै सुखी भवितुमिच्छति।<br>ईषदप्यत्र दुष्कर्म न कुर्यात् स परस्य तु॥ |
| २१० | अधर्मेण पथा गच्छन् अन्येभ्यो दुष्कृति नर:।<br>यदि कश्चिन्न कुरुते तं दु:खं दूरतस्त्यजेत्॥ |

## अधिकार २२ . लोकोपकारिता

| | |
|---|---|
| २११ | मेघानं वर्षतां नित्यं कि साह्यं कुर्वते जना:।<br>मेघतुल्या महान्तोऽपि निष्काममुपकुर्वते॥ |
| २१२ | लोकोपकर्तृभिर्वित्तं प्रयत्नात् समुपार्जितम्।<br>सत्पात्रे दीयमानं सत् प्रयोजनकरं भवेत्॥ |
| २१३ | लोकोपकारिताख्येन धर्मेण भुवि जीवनात्।<br>सत्कार्यमुत्तमं नास्ति स्वर्गे वा भूतलेऽपि वा॥ |
| २१४ | लोकनामुपकर्ता य: शिष्टाचारपरायण:। |

| | |
|---|---|
| | स जीवति शरीरेण मृतप्रायो नरोऽपर:॥ |
| २१५ | जलपूर्णतटाकेन भवन्ति सुखिनो जना:।<br>लोकोपकारिणो भाग्यं लोकसौख्यं प्रयच्छति॥ |
| २१६ | फलभारनतो वृक्ष: ग्राममध्यं गतो यथा।<br>लोकोपकारी वित्ताढयस्तथा स्यादुपकारक:॥ |
| २१७ | सर्वभागैर्यथा वृक्ष: रुग्णानामौषधायते।<br>लोकोपकारिणो वित्तं तथा सर्वोपकारकम्॥ |
| २१८ | लोकोपकारमाहात्म्यं जानन्तो ज्ञानिसत्तमा:<br>स्वस्य दारिद्र्यकालेऽपि परेषामुपकर्वते॥ |
| २१९ | लोकोपकारिचित्तस्य दारिद्र्यमिदमुच्यते।<br>न शक्नोम्यधिकं दांतु दारुद्र्ययेति यन्मतम्॥ |
| २२० | लोकोपकारात् दारिद्र्यम् जायेतेति वदेत् यदि।<br>भप्यात्मविक्रयेणैतत् दारिद्र्यक्रयणं वरम्॥ |

## अधिकार २३. दानम्

| | |
|---|---|
| २२१ | अर्थिभ्योऽपेक्षितं यत्तु दीयते दानमुच्यते।<br>इतराणि तु दानानि स्वार्थमूलानि केवलम्॥ |
| २२२ | मोक्षलाभी भवेत् कामं याचनं न हि संमतम्।<br>नरकेऽपि समायाते दानं सर्वात्मना वरम्॥ |
| २२३ | 'अहं दरिद्रो देही' ति वाक्यश्रवणमन्तरा।<br>महकुलप्रसूतेषु दृश्यते दानशीलता॥ |
| २२४ | याचकस्य मुखं दानात् प्रसन्नं न भवेत् यदि।<br>दातृत्वमपि याञ्चेव जायते दु:खदं सदा॥ |
| २२५ | अवारयन् क्षुघं भोज्यैयेंगी तत्सहनक्षम:।<br>तामापाकुर्वतोऽन्नाद्यै गृहस्थानाधिको मत:॥ |

| | |
|---|---|
| २२६ | धनी क्षुधं यदार्तस्य वारयेत्, भाविजन्मसु।<br>तदात्मफल लाभाय स्थिरं मुलधनं भवेत्॥ |
| २२७ | भुक्तवन्तं सहान्येन् लब्धं वस्तु विभज्य तु।<br>क्षुण्णामाऽयं महारोगो दूरन्नित्यं विमुञ्चित॥ |
| २२८ | अभुक्तं स्वेन चान्येभ्योऽप्यदत्तं यस्य वै धनम्।<br>क्षीयते कि न जानाति स सौख्यं दानमूलकम्?॥ |
| २२९ | अदत्वैव परेभ्यो यद्भुज्यते स्वार्जितं धनम्।<br>दरिद्र्यान्मरणाञ्च स्या दह्रो कष्टतरं तत:॥ |
| २३० | नास्ति मृत्युसमं दु:खमथाप्यर्थिभिरीप्सितम्।<br>तेभ्यो दातुमशक्तस्य मृत्युरेव वरो मत:॥ |

## अधिकार २४. कीर्ति:

| | |
|---|---|
| २३१ | अर्थिभ्यो वाञ्छितं दत्त्वा कीर्त्या सह वसेन्नर:।<br>नरस्य जन्मसाफल्यं नास्ति कीर्ति विना भुवि॥ |
| २३२ | याचकेभ्यो दारिद्र्यभ्य: स्वल्पं वापि प्रयच्छत:।<br>कीर्तिरेव सदा सद्भिर्गीता भवति शाश्वती॥ |
| २३३ | बहुकालमभिव्याप्य तिष्ठन्तीं कीर्तिमन्तरा।<br>लोके निरुपमं नित्यमेकं वस्तु न विद्यते॥ |
| २३४ | पृथिव्या: स्थितिपर्यन्तां कीर्ति यो लभते नर:<br>स्वर्गलोकोऽपि तं स्तौति न तु ज्ञानसमन्वितान्॥ |
| २३५ | स्थिरकीर्त्या च मरणं यश्:कायेन जीवनम्।<br>महतां ज्ञानिनामेव लभ्यं स्यात् नापरस्य तु॥ |
| २३६ | यदीष्टं मानुषं जन्म कीर्त्या जननमुत्तमम्।<br>अन्यथा मृगजन्मैव श्लाघ्यते मर्त्यजन्मन:॥ |
| २३७ | अशक्तो जीवितुं कीर्त्या न द्वेष्ट्यात्मानमात्मना। |

| | |
|---|---|
| | किन्त्वात्मनिन्दकं द्वेष्टि किं भवेदत्र कारणम्॥ |
| २३८ | अनवाप्य यशो लोके ये हि जीवन्ति मानवा:।<br>निन्दितं जीवनं तेषामिति सद्भि: प्रकीर्त्यते॥ |
| २३९ | यशसा तु विहीनस्य कायं या बिभृयान्मही।<br>निर्दुष्ट सस्यसम्पत्तिविहीना सा भवेद् ध्रुवम्॥ |
| २४० | अपवादेन रहितो यो जीवति स जीवति।<br>जीवन्नप्यपवादेन मृतप्रायो हि गण्यते॥ |

## अधिकार् २५. दया

| | |
|---|---|
| २४१ | दयारूपं धनं सर्वधनादुत्तम मुच्यते।<br>इतराणि धनानीह सन्ति नीचजनेष्वपि॥ |
| २४२ | सन्मार्गेण परामृश्य भवितव्यं दयावता।<br>सर्वशास्त्र परामर्शेदयैका साह्याकारिणी॥ |
| २४३ | अन्धकारमयं धोरं नरकं न भजन्ति ते।<br>ये वै दयाद्रहृदया वर्तन्ते सर्वजन्तुषु ॥ |
| २४४ | रक्षणात् सर्वजन्तूनां दयायाश्च प्रदर्शनात्।<br>नरो न लभते नूनं दुष्कर्म नरकप्रदम्॥ |
| २४५ | दयार्द्रहृदयो भूत्वा दु:खं नाप्नोति भूतले।<br>निदर्शनं भवेदत्र लोकोऽयं प्राणिसङ्कुल:॥ |
| २४६ | जना: प्राणिदयाहीना: प्राणिनो हिंसयन्ति ये।<br>धर्मत्यागागतं जन्मदु:खं नाद्यापि तै: स्मृतम्॥ |
| २४७ | वित्तहीनो न लभते इहलोके यथा सुखम्।<br>परलोके न लभते दयाशून्य: सुखं तथा॥ |
| २४८ | सत्कर्मणा दरिद्रोऽपि कदाचिद्धनिक: सुखी। |

| | |
|---|---|
| | निर्दयस्य कुत: सौख्यं न कदापि स वर्धते॥ |
| २४९ | ज्ञानशून्यो यथा शास्त्रात्तत्त्वार्थे नैव विन्दति।<br>निर्दय: स्वकृताद्धर्मात्तथा न लभते फलम्॥ |
| २५० | यदा करुणया हीनो हिंसयेद्दुर्बलम् तदा।<br>स्वस्माद्बलीयसामग्रे चिन्तयेत् स्वभयस्थितिम्॥ |

## अधिकार २६. माँसवर्जनम्

| | |
|---|---|
| २५१ | पोषणार्थे स्वदेहस्य कृत्वा य: प्राणिहिंसनम्।<br>तन्मांसभक्षणपर: स दयावान् कथं भवेत्॥ |
| २५२ | धनस्यारक्षणान्मार्त्यो निर्धनो जायते यथा।<br>तथा मांसशनपरो दयाहीन: प्रकीर्त्यते॥ |
| २५३ | प्राणिमांसरसास्वाद निमग्नस्य हि मानसम्।<br>घातकस्यात्तशस्त्रस्य चित्तवन्निर्दयं भवेत्॥ |
| २५४ | अहिंसैव दया प्रोक्ता हिंसेयमदया मता।<br>प्राणिभांसाशनं लोके पापमाख्यायते॥ |
| २५५ | मांसहारोभिवृद्धश्चेत् सदेहं प्राणिनामिह।<br>दुर्लभा स्थितिरेव स्यात् नरकश्चापि जायते॥ |
| २५६ | मांसार्थे न भवेत् प्राणि हिंसा चेदिह भूरिश:।<br>धनार्थे नैव वर्तेरन् मांसविक्रयिणो नरा:॥ |
| २५७ | मांसां न भक्षयेत् प्राज्ञ:, क्रियमाणे विमर्शने।<br>व्रणो हि प्राणिनां मांसमिति ज्ञानं भवेत् यत:॥ |
| २५८ | निर्दुष्टज्ञान सम्पन्नास्त्रिदोषण विवर्जिता:।<br>शरीरं प्राणरहितं शवं मत्वा न भुञ्जते॥ |
| २५९ | नानायागविधानेन जायमानात् फलादपि। |

| | |
|---|---|
| | मांसाहारपरित्यागाच्छ्रेय: फलमवाप्यते॥ |
| २६० | प्राणिहिंसा विरहितं विमुखं मांसभक्षणे। सर्वे देवा नराश्चैव विनमन्ति नरोत्तमम्॥ |

## अधिकार २७. तप

| | |
|---|---|
| २६१ | उपवासादिदु:खानां सहनं जीवसन्ते:। दु:खानुत्पादनं चेति तपोलक्षणमुच्यते॥ |
| २६२ | जन्मान्तरतपोभ्यास शालिनो मनुजस्य तु। तप: स्यादत्र निर्विघ्नं विपरीते वृथाश्रम:॥ |
| २६३ | आहारादिप्रदानेन प्रशस्तानां तपस्विनाम्। गृहस्था: साह्यमिच्छन्तो निवृत्तास्तपस: किमु॥ |
| २६४ | साधूनां सङ्ग्रहे दुष्टजनानां निग्रहेपि च। शक्ति:स्मरणमात्रेण महतां स्यात्तपोबलात्॥ |
| २६५ | तथैवाभीप्सितं सर्वे प्रयत्नाद्भाजन्मसु। लभ्यते हि गृहस्थेन तप: कर्तुमिह क्षणम्॥ |
| २६६ | क्रियते यैस्तप: कर्म कृतकृत्यास्त एव हि। आशापाशवशा हन्त क्लिश्यन्त इतरे जना:॥ |
| २६७ | असकृद्वह्निसन्तप्तं सुवर्णे सुष्ठु राजते। तप: क्लेशितकायस्य ज्ञानं सम्यक् प्रकाशते॥ |
| २६८ | पश्यन्तमात्मनाऽऽत्मानं तपस्यन्तं जितेन्द्रियम्। सर्वे नरा नमस्यन्ति बहुमानपुरस्सरम्॥ |
| २६९ | शापेऽप्यनुग्रहे चैव शक्तिमन्तस्तपस्विन: कालपाशविनिर्मुक्ता: प्राप्नुवन्ति परां गतिम्॥ |
| २७० | बहवस्तपसा हीना:, विरलास्तु तपस्विन:। |

धनिकास्तेन विरला इतरे बहवोऽभवन्॥

## अधिकार् २८. दुराचार:

२७१ वञ्चकस्य दुराचारं तच्छरीरगतान्यपि।
पञ्च भूतानि दृष्टवैव मन्दमन्तर्हसन्ति हि॥

२७२ अकार्यमिति मत्वापि कुर्वत: पुनरेव तत्।
आकाशेनेव महता तपोवेषेण किं फलम्?॥

२७३ मनसो निग्रहं हित्वा मुनिवेषस्य वर्तनम्।
वुआघ्रचर्मवृत्तो घेनु: सस्यं चरति चेत्, तथा॥

२७४ तपोवेषनिलीनेन परदारपरिग्रह:।
गुल्मलीननिषादेन पक्षिग्रहणवद्भवेत्॥

२७५ 'अहं वितक्त' इत्युत्क्वा दुश्चर्यां यो निषेवते।
'किं कृतं किं कृतं हे' ति फलकाले स खिद्यते॥

२७६ मनोवैराग्यमप्राप्य विरक्त इव यो नर:।
वर्तते कपटाचार: कठिनो नास्ति तत्सम:॥

२७७ बहिर्गुञ्जासमाकारा: बहवो रक्तवासस:।
अज्ञान मन्तरेतेषां गुञ्जाग्रे श्यामता यथा॥

२७८ दुष्टचित्तास्तपस्सिद्धा इव स्नानेन केवलम्।
कपटाचारसञ्छन्ना वञ्चका: सन्ति भूरिश:॥

२७९ काठिन्यमार्दवे बाणवीणरो: कर्मणा ग्रथा।
मुनावपि तथा ज्ञेयं न वेषस्तत्र कारणम्॥

२८० लोकदूष्ये दुराचारस्त्यज्यतेचेत् तपस्विभि:।
कुतो वा मुण्डनं तेषां जटाभारेण वा किमु॥

## अधिकार २९. चौर्यनिषेध:

| | |
|---|---|
| २८१ | परैरनिन्दितो लोके यो वै जीवितुमिच्छति।<br>विना वस्त्वपहारेच्छां तेन रक्ष्यं सदा मन:॥ |
| २८२ | निषिद्धस्मरणेनापि दोष: स्यादिति कथ्यते।<br>अज्ञात्वैवापहर्तव्यमिति त्याज्या मतिस्तत:॥ |
| २८३ | चौर्यदुपार्जितं वित्तं प्रवृद्धमिव पश्यताम्।<br>भूत्वा न्यायार्जितैर्वित्तैस्सह पश्चाद्विनश्यति॥ |
| २८४ | चौर्येण परवस्तूनां प्रा[त्या जातो मनोरथ:।<br>पश्चात्कर्मेपरीपाके दद्यात् दु:खं हि शाश्वतम्॥ |
| २८५ | चौर्यमाचरितुं युक्तकालं यस्तु प्[रतीक्षते।<br>सर्व भूतदयायां स स्नेहयुक्तो न जायते॥ |
| २८६ | ग्रे परद्रव्यचौर्येषु लम्पटा: सन्ति मानवा:।<br>व्ययीकृत्य मितं वित्तं जीवन्ति न हि ते सुखम्॥ |
| २८७ | आत्मानात्म विवेकादौ समर्थानां मनीषिणाम्।<br>चौर्य कारणमज्ञानं जायते न कदाचन॥ |
| २८८ | कृततत्वविचारणां हृदये यतिधर्मवत्।<br>अभ्यस्त चौर्य विद्यानां चित्ते स्याद्वञ्चना स्थिरा॥ |
| २८९ | ये चौर्यमात्रं जानन्ति धर्मान्नापि विदन्ति ये।<br>अकृत्यमधिकं कृत्वा सद्यो नश्यन्ति ते ध्रुवम्॥ |
| २९० | जीवनं स्पष्टमाकृत्या चोराणामिह दुर्लभम्।<br>चौर्यकर्मविहीनानां स्वर्गोऽपि सुलभायते॥ |

## अधिकार ३०. सत्यवचनम्

| | |
|---|---|
| | |
| २९१ | वचनेन प्रयुक्तेन कस्यचित् मात्रयाऽपि चेत्।<br>दु:खानुत्पादनं लोके सत्यलक्षणमुच्यते॥ |
| २९२ | असत्य वचनं चापि यदि स्यात् प्राणिनामिह।<br>अनिन्दितोपकाराय तत् सत्यवचनं मतम्॥ |
| २९३ | असत्यमिति मत्वापि कथयन्ननृतं वच:।<br>पश्चात्तप्तमना भूत्वा ततो दु:खं स विन्दति॥ |
| २९४ | सत्यमार्गेण गच्छन्तं तथा हृदयपूर्वकम्।<br>कृत्वा मनसि सर्वेऽपि प्रशंसन्ति नरोत्तमा:॥ |
| २९५ | मनोवाक्समभावेन सत्यवादी नरो भुवि।<br>तपोदानगुणाढ्येभ्यो नरेभ्योप्युत्तम: स्मृत:॥ |
| २९६ | न सत्यवचनादन्यद्विद्यते कीर्तिवर्धकम्।<br>कायक्लेशं विना वक्तुस्तत् स्वर्गमपि यच्छति॥ |
| २९७ | अनृतं वाक्य मुत्सृज्य जीवद्भिर्भुवि मानवै:।<br>समेषामन्यधर्मणां त्यागोऽपि किल सम्मत:॥ |
| २९८ | बाह्यदेहस्य संशुद्धि: सलिले स्नानतो यथा।<br>अन्तर्हृदयसंशुद्धिस्तथा स्यात् सत्यभाषणात्॥ |
| २९९ | लोकान्धकारं नुदतां दीपानां न हि दीपता।<br>हृत्तमोनाशकं सत्यवचनं दीप उच्यते॥ |
| ३०० | सर्व शास्त्रपरामर्शादिदमेकं सुनिश्चितम्।<br>यत् सत्यवचनादन्यो धर्मो नास्ति महीतले॥ |

## अधिकार ३१. क्रोधविजय:

| | |
|---|---|
| | |
| ३०१ | अशक्ते कोपरहित: जितक्रोध इतीर्यते।<br>शक्ते क्रोधं जयतु वा मा वा स विषय: पर:॥ |
| ३०२ | शक्तेषु कोपकरणात् दण्डदु:खमिहाश्नुते। |

| | |
|---|---|
| | अशक्ते कुपितो निन्दां पापं च लभते द्वयम्॥ |
| ३०३ | विस्मृत्य वर्तितव्यं तु सर्वत्र क्रोधमन्तरा।<br>क्रोधाद्भवन्ति दु:खानां परिणामास्त्वनेकधा॥ |
| ३०४ | मुखे विकसं मनसि तुष्टिं क्रोधो विनाशयेत्।<br>तस्मात् क्रोधसम: शत्रु: को न्वस्ति भुवि देहिनाम्?॥ |
| ३०५ | य आत्मरक्षणे व्यग्र: स कोपं परिवर्जयेत्।<br>अन्यथा शत्रु भूतोऽसौ नाशयेत् कोपशालिनम्॥ |
| ३०६ | आश्रयं नाशयेद्वह्नि: कोपाग्नि स्वाश्रितै: सह।<br>ज्ञानोपदेष्टन् दूरस्थान दहेन्नौकासमान् गुरून्॥ |
| ३०७ | वस्तुना कोपरूपेण स्वप्रभाव प्रकाशक:।<br>महीं ताडयते हस्त इव नूनं प्रबाध्यते॥ |
| ३०८ | चण्डज्वालासमेताग्निदाहेन सदृशीं व्यथाम्।<br>कुर्वत्यपि नरे क्रोधो न कार्यो यदि शक्यते॥ |
| ३०९ | क्रोधं यस्तु महाप्राज्ञो मनस: संनिधापयेत्।<br>वाञ्छिता: सम्पद: सर्वा: सद्य एवाप्नुवन्ति तम्॥ |
| ३१० | नरा: क्रोधवशं प्राप्ता मृतप्राया भवन्ति हि।<br>जितक्रोधा नरा: सर्वे मन्यन्ते योगिभि: समा:॥ |

## अधिकार ३२. अपकारत्याग

| | |
|---|---|
| ३११ | यश: पदे महाभाग्ये प्राप्तेऽपि परहिंसया।<br>अपकारमतिं त्यक्त्वा लक्ष्ये जीवन्ति साधव:॥ |
| ३१२ | विरोधादपकर्तुश्च प्राप्तेऽपि समयान्तरे।<br>अपकारमकृत्वैव लक्ष्ये तिष्ठन्ति साधव:॥ |
| ३१३ | कारणेन विना द्रोहं कुर्वतामपि देहिनाम्।<br>अपकारो न कर्तव्योनो चेत् दु:खं स विन्दति॥ |
| ३१४ | उपकृत्यापि श्त्रूणा मुपकारापकारयो:। |

| | |
|---|---|
| | विस्मृति: साधुभिर्दत्तं दण्डनं स्याद्विरोधिषु॥ |
| ३१५ | परदु:खं स्वदु:खेन समं मत्वापि तो जन:।<br>परान्न त्रायते तस्य तत्वज्ञानेन किं फलम्?॥ |
| ३१६ | 'अनेन कर्मणा दु:खं प्राणिनां भविता ध्रुवम्'।<br>इति निर्धारितात् कार्यात् सर्वदा विरतो भवेत्॥ |
| ३१७ | सर्वत्र सर्वदा किञ्चिदपि दु:खप्रदायकम्।<br>बुद्धिपूर्वे न कर्तव्यं स धर्म: परमो मत:॥ |
| ३१८ | 'ममेदं दु:खजनकमि'ति ज्ञात्वापि तादृशम्।<br>प्राणिनामितरेषां च कुतो वा कुर्वते जना:?॥ |
| ३१९ | अपकारान् य: करोति पूर्वाह्णे परदेहिनाम्।<br>अपराह्णे तु दु:खानि स्वत एव भजन्ति तम्॥ |
| ३२० | परापकारो नो कार्य: निर्दु:खं वस्तुमिच्छता।<br>परदु:खकरा एव दु:खवन्तो भवन्ति हि॥ |

## अधिकार ३३. अवध

| | |
|---|---|
| ३२१ | प्राणिनामवधेनैव सर्वपुण्यफलं भवेत्।<br>हननात्प्राणिवर्गाणां सर्व पापफलं भवेत्॥ |
| ३२२ | लब्धं विभज्य भुक्त्वा तु यत्प्राणिपरिरक्षणम्।<br>शास्त्रकारोक्त धर्मेषु प्रशस्तमिदमीर्यते॥ |
| ३२३ | आद्यो निरुपमो धर्म: प्राणिनामवधो मत:।<br>विमृष्टे सत्यकथनं द्वितीयं स्थानमर्हति॥ |
| ३२४ | अकृत्वा प्राणिनां हत्यां लक्ष्यमार्गे प्रवर्तनम्।<br>मोक्षादिलोकजनक: सन्मार्ग इति मन्यते॥ |
| ३२५ | अवधाख्यं वरं धर्मे य: सदा परिरक्षति।<br>संसारभीत्या सन्न्यास भाजिनोऽप्युत्तमो हि स:॥ |

| | |
|---|---|
| ३२६ | अवधाख्ये वरे धर्मे विद्यमानस्य शाश्वतम्।<br>जीवितेऽग्रये कृतान्तोऽपि न विशेत् प्राणभक्षक:॥ |
| ३२७ | आत्मानो मरणं वापि जायतां प्राणिमूलकम्।<br>न कार्या प्राणिनां हत्या स्वात्मरक्षणमिच्छता॥ |
| ३२८ | जीवनां हत्यया श्रेष्ठं भाग्यं कामं भवेद् भृशम्।<br>वधमूलगातं भाग्यं सन्त: पश्यन्ति गार्हितम्॥ |
| ३२९ | वधदोषं विजानन्त: सन्तो हत्याकारन् जनान्।<br>कुलीनानपि चण्डालसमान् पश्यन्ति कर्मणा॥ |
| ३३० | रुग्णान् दरिद्रान् शास्त्रज्ञा: पश्यन्तो नीवजीवनान्।<br>"इमे जन्मान्तरे जघ्नु: प्राणा" नित्येव जानते॥ |
| | |

## अधिकार् ३४. अनित्यता

| | |
|---|---|
| | |
| ३३१ | अनित्येषु पदार्थेषु नित्यताया निरूपणात्।<br>मन्दबुद्धिर्यदि भवेत् निन्दितं तस्य जीवितम्॥ |
| ३३२ | आयान्ति सम्पदो लोका इव नाटकमन्दिरम्।<br>निर्यान्ति सम्पदो लोका इवान्ते नाटकालयात्॥ |
| ३३३ | अस्थिरं सर्वदा भाग्यं तद्भाग्यं यदि लभ्यते।<br>सद्यस्तेन स्थिरा धर्मा: कर्तव्या मोक्षमिच्छता॥ |
| ३३४ | कृपाणसदृशो भूत्वा दिवस: तत्त्ववित्तमान्।<br>विशस्य क्रमश: काले क्षीणप्रणाण् करोत्यहो॥ |
| ३३५ | ऊर्ध्वश्वास: स्वलज्जिह्न: मृत्युबाधायुतो यदा।<br>न भवेत्त्वरया पूर्वे मोक्षार्थे धर्ममाचरेत्॥ |
| ३३६ | आसीत्पूर्वदिने कश्चिदद्य सोऽयं मृतोऽभवत्।<br>इत्यस्थिरत्वमाहात्म्य परीतं लोकजीवितम्॥ |

| | |
|---|---|
| ३३७ | क्षणिकं जीवनं मूढा न स्मरन्ति कदाचन।<br>चिन्तयन्ति परं नाना कोटिशो विषयान् वृथा॥ |
| ३३८ | द्विजे चाण्डं परित्यज्य व्योममार्गे गते सति।<br>द्विजस्याण्डेन सम्बन्धो य: स स्याज्जीवदेहयो:॥ |
| ३३९ | जीवस्य मरणं लोके निद्रया सदृशं भवेत्।<br>पश्चात् प्रबोध तुल्यं स्यात् जीवस्य, जननं पुन:॥ |
| ३४० | रोगाधीनशरीरस्य कोणे जीव: स्थितोऽधिपै:।<br>व्याधिभिर्हिंसितोऽद्यापि किं न लेभे स्थिरं गृहम्?॥ |

## अधिकार ३५. सन्न्यास:

| | |
|---|---|
| ३४१ | आसक्तिं कुरुते नैव यस्मिन् यस्मिश्च वस्तुनि।<br>तस्मात्तस्माद्वस्तुन: स न दु:खं लभते नर:॥ |
| ३४२ | यदीच्छसि सुखं वस्तुं सत्स्वेव वहुवस्तुषु।<br>जहि तानि महत्सौख्यं तव तेन भवेदपि॥ |
| ३४३ | आदौ पञ्चेन्द्रियग्राह्याद्विषयाद्विरतो भवेत्।<br>पश्चात्सर्वपदार्थेषु त्यागबुद्धिर्वरा मता॥ |
| ३४४ | सर्वसङ्गपरित्यागात् सुलभं वर्धते तप:।<br>बन्धनाद्योग विभ्रष्टस्त्वज्ञानवशगो भवेत्॥ |
| ३४५ | संसारान्मुक्तिकामस्य देहो भवति भारद:।<br>तथा सत्यन्यदेहेन कुत: सम्बन्धकल्पनम्॥ |
| ३४६ | मेमेदमहमेवेति नानाज्ञान विवर्जिता:।<br>प्राप्नुवन्ति महत्स्थानं देवनमपि दुर्लभम्॥ |
| ३४७ | ममकारहंकृतिभ्यां विमुक्तो यो न जायते।<br>दु:खान्यपि न मुञ्चन्ति सर्वदा तं नराधमम्॥ |

| | |
|---|---|
| ३४८ | उत्तम: स हि म्न्तव्य: सर्वे त्याजति य: क्षणे।<br>अज्ञानवशमापन्ना भवन्ति मनुजा: परे॥ |
| ३४९ | द्विविधे बन्धने याते जन्मदु:खं विमुच्यते।<br>अन्यथा जन्ममरण प्रवाहस्त्वनवस्थित्:॥ |
| ३५० | सर्वबन्धविनिर्मुक्ते हरौ बध्नाति यो मन:।<br>सर्वस्माद् बन्धनामुक्ति: स्वतस्तस्य भविष्यति॥ |

## अधिकार ३६. तत्वज्ञान

| | |
|---|---|
| ३५१ | असत्यं सत्यमित्येव पश्यद्भिर्भ्रममूलत:।<br>प्राप्यते जन्म चाज्ञानात् गर्हितं दु:खदायकम्॥ |
| ३५२ | अविद्यां समतिक्रम्य तत्त्वज्ञान निषेवणात्।<br>जन्मदु:खमलब्ध्वैव प्राप्यते ब्रह्मण: पदम्॥ |
| ३५३ | असंशयमधीत्यात स्तत्त्वज्ञान मुपेयुषाम्।<br>भूलोकादपि दूरस्थमत्के स्याद्दब्रह्मण: पदम्॥ |
| ३५४ | इन्द्रियाणीन्द्रियार्थेभ्य: नियम्य मनसो वशे।<br>स्थापनेनापि किं कार्ये तत्त्वज्ञानं न चेद्भवेत्॥ |
| ३५५ | तेषु तेषु पदार्थेषु पदार्थान्तर विभ्रमम्।<br>विहाय तत्त्वतो ज्ञानं तत्त्वज्ञानमितीर्यते॥ |
| ३५६ | अध्येतव्यं गुरुमुखादधीत्य बहुधा बहु।<br>तत्त्वार्थज्ञान सम्पन्ना यान्ति मोक्षपथं स्थिरम्॥ |
| ३५७ | श्रुतार्थस्य परामर्शात् तत्त्वमाघं विजानत:।<br>जन्मास्य पुनरस्तीति न मन्तव्यं कदाचन॥ |
| ३५८ | जन्मबाधाकराज्ञान मुक्तये मुक्तिदस्य तु।<br>ब्रह्मणो दर्शनं यत्तु तत्त्वज्ञानं तदुच्यते॥ |

| | |
|---|---|
| ३५९ | ज्ञात्वा ब्रह्म जगद्धेतुं यतमानस्य मुक्तये।<br>जन्ममृत्युमयं दु:खं न जायेत कदाचन॥ |
| ३६० | काम: क्रोधस्तथाऽज्ञानमिति दोषास्त्रयो हृदि।<br>नाम्नापि न भवेयुश्चेद्धवदु:खं विनश्यति॥ |

## अधिकार ३७. निराशा

| | |
|---|---|
| ३६१ | अनुस्यूतं प्रवृत्तस्य सर्वदा सर्वजन्तुषु।<br>संसारमय दु:खस्य बीजमाशेत्युदीर्यते॥ |
| ३६२ | लभ्यतां जन्मराहित्यं लब्धव्यं किञ्चिदस्ति चेत्।<br>तदपि प्राप्यते सर्व वस्तुनैराश्य बुद्धित:॥ |
| ३६३ | निराशासदृशं श्रेष्ठं वित्तं नास्ति जगत्तले।<br>लोकान्तरेऽपि तत्तुल्यं वस्तु लब्धुं न शक्यते॥ |
| ३६४ | आशाविरहितावस्था मोक्ष इत्युच्यते बुधै:।<br>अवस्था सापि तत्त्वस्य ब्रह्मणो भजनाद्भवेत्॥ |
| ३६५ | ते जन्मरहिता ज्ञेया ये निराशास्तु सर्वत:।<br>आशायुतानां नि:शेषं बन्धमुक्तिर्न जायते॥ |
| ३६६ | आशा समयमालक्ष्य पातयेत् जन्मबन्धने।<br>निराशारक्षणं तस्माच्छ्रेष्ठो धर्म: प्रगीयते॥ |
| ३६७ | सर्वशाविजये प्राप्ते कायशोषण मन्तरा।<br>लभ्यते जन्मराहित्यं सर्वो धर्म: कृतो भवेत्॥ |
| ३६८ | निराशानां कुतो दु:खम्, आशापाशवशात्मनाम्।<br>उपर्युपरि दु:खानि समयान्ति निरर्गलम्॥ |
| ३६९ | दु:खेषु परमं दु:खमाशादु:खं विमुञ्चत:।<br>न परं ब्रह्मणो लोके, सुखमत्रापि शाश्वतम्॥ |

३७० सदा दवीयसीमाशां यो वै जयति सर्वदा।
निर्विकारां तथा नित्यं मुक्तिं सद्य: स विन्दति॥

## अधिकार ३८. विधि:

३७१ अर्थार्जने प्रयत्न: स्यादर्थप्रापककर्मणा।
आलस्यं जायते तस्मिन्नर्थ  नाशककर्मणा॥

३७२ विदुषोऽपि भवेन्मौढ्यं अर्थनाशककर्मणा।
मूढस्यापि भवेज्ज्ञान मर्थप्रापककर्मणा॥

३७३ अधीत सर्व शास्त्रैरप्यशुभं कर्म यत् कृतम्।
तदेव समयं प्राप्य तत्त्वज्ञानं विनाशयेत्॥

३७४ एको भवति वित्ताढ्यो विद्यया सहितोऽपर:।
कारणं विधिरेवात्र स्वभावो लोकसम्मत:॥

३७५ अकालेऽप्याप्नुयाद्वित्त मनुकूले विधौ सति।
कालेऽपि तन्न लभ्येत विपरीते विधौ सति॥

३७६ सुरक्षितमपि भ्रश्येत् विधिमूलमनागतम्।
अरक्षितं च तित्तिष्ठे द्विधिमूलं यदागतम्॥

३७७ कोटिसंख्यायुतं वित्तं सम्पादयतु वोपरि।
विधिना यावदाप्नोति भोक्तुं नालं ततोऽधिकम्॥

३७८ दुष्कर्मवशमापन्ना महाभाग्यात् स्थितादपि।
नरा: सुखं न विन्दन्ति सन्न्यासं प्राप्नुवन्ति च॥

३७९ लब्ध्वा शुभतरं कर्म हृष्टो भवसि सर्वदा।
अशुभे तु समायाते वृथा शोचसि तत् कुत:?॥

३८० विधिना तु समं वस्तु बलवन्नेह विद्यते।
विनाश्य मानुषं यत्नं विधिरेव जयेत् सदा॥

# भाग–२: अर्थ-काण्ड:

**राजधर्माध्याय**

| अधिकार ३९. राजमहिमा | |
|---|---|
| | |
| ३८१ | राज्यमन्त्रिसुहृत्सैन्यदुर्गकोशैश्च षड्विधै:।<br>अङ्ग: समन्वितो राजा राजसिंह इतीर्यते॥ |
| ३८२ | दातृत्वं ज्ञानसम्पत्ति: उत्साहो धीरता तथा ।<br>गुणैरेतैश्चतुर्भिर्यो नित्ययुक्त: स पार्थिव: ॥ |
| ३८३ | पौरुषं जागरूकत्वं विद्या चेति त्रयो गुणा: ।<br>राज्यभारनियुक्तानां राज्ञां स्वाभाविका मता: ॥ |
| ३८४ | अधर्मेन्मूलनं स्वीयधर्माचरणशीलता ।<br>दुरहङ्काररराहित्यं त्रितयं नृपलक्षणम् ॥ |
| ३८५ | कुर्याद्धनार्जनोपायमार्जयेत् पालयेद्धनम् ।<br>रक्षितं च यथाशास्त्रं दद्यात् पात्रेषु भूमिप ॥ |
| ३८६ | विमुख: क्रूरवाक्यानां राजा सुलभदर्शन:।<br>यो भवेत् तस्य साम्राज्यं सर्वश्लाघ्यं भविष्यति ॥ |
| ३८७ | यो ददाति जनान् पाति प्रियभाषणपूर्वकम् ।<br>तस्य राज्ञ: स्थिरं कीर्तिमर्थाश्च वितरेन्मही ॥ |
| ३८८ | धर्मनीत्यनुसारेण पालयन् सकला: प्रजा: ।<br>पार्थिव: श्लेघ्यते सर्वै: जगतां पतिरित्यसौ ॥ |
| ३८९ | कठिनं चापि महतां वाक्यं पश्चाद्धितप्रदम् ।<br>श्रुत्वा य: सहते राजा तिष्ठेत्तस्य वशे मही ॥ |
| ३९० | दानं दया दण्डनीति: दीनरक्षेति सद्गुणै: । |

| |
|---|
| चतुर्भि: सङ्गतो भूपो दीपवत् स्यान्महीक्षिताम् ॥ |

## अधिकार ४०. विद्या

| | |
|---|---|
| ३९१ | अध्येतव्या: समे ग्रन्था: निस्सन्देहं यथार्थत: ।<br>अधीतग्रन्थदृष्टेंन पथा युक्तं प्रवर्तनम् ॥ |
| ३९२ | न्यायव्याकरणाख्ये द्वे शास्त्रे मुख्ये नृणामिह ।<br>उभे हि चक्षुषी स्यातामिति सद्भिरुदीर्यते ॥ |
| ३९३ | चक्षुष्मन्तस्त एव स्यु: ज्ञानचक्षुर्युतास्तु ये ।<br>इतरेषामुभे नेत्रे व्रणे स्यातां मुखोत्थिते ॥ |
| ३९४ | यत्सङ्गन जनास्तुष्टा: भवेयु:, सङ्गमं पुन: ।<br>वियोगकाले वाञ्छेयु: स भवेत्पण्डितोत्तम: ॥ |
| ३९५ | रिक्तवद्धनिकस्याग्रे विनीता गुरुसन्निधौ ।<br>भूत्वा पठन्ति ये नित्यं शिष्टास्ते निन्दिता: परे ॥ |
| ३९६ | विद्यभ्यासानुसारेण नृणां ज्ञानां प्रवर्धते ।<br>खननानुगुणं तोयं वर्धते सैकते यथा ॥ |
| ३९७ | सर्वे देशा: समे ग्रामा: स्वीया: स्युर्विदुषां भुवि ।<br>तथा सति कुत: कैश्चित् विद्या नाधीयते सदा ॥ |
| ३९८ | एकजन्मन्यधिगता विद्या नूनं हि केनचित् ।<br>सप्तजन्मस्वनुगता तस्य साह्यकरी भवेत् ॥ |
| ३९९ | निजानन्दकरीं विद्यां परेषां निजमूलत: ।<br>आनन्ददात्रीं विज्ञाय तां प्राज्ञा बहुकुर्वते ॥ |
| ४०० | विद्याधनं स्थिरं श्रेष्ठमेकमेव धनं भवेत् ।<br>धनान्यन्यान्यस्थिराणि वस्तुतो न धनानि हि ॥ |

| अधिकार ४१. विद्याविहीन: | |
|---|---|
| | |
| ४०१ | अनधीत्यैव सद्ग्रन्थान् सद्गोष्ठयां य: प्रभाषते ।<br>विना रङ्गस्थलीमक्षप्रयोक्त्रा स भवेत् सम: ॥ |
| ४०२ | अपण्डितस्य विदुषां पुरतो भाषणे मति: ।<br>नार्य: कुचाभ्यां हीनाया: स्त्रीत्वकाङ्क्षेव निष्फला ॥ |
| ४०३ | विद्याविहीनमनुजा: समक्षं ज्ञानशालिनाम् ।<br>मौनमालम्ब्य तिष्ठन्त: भजन्ते नोपहास्याताम् ॥ |
| ४०४ | विद्याभ्यासं विना ज्ञानं विन्दते स्वयमेव य: ।<br>निर्दुष्टमपि तद् ज्ञानं न श्लाघन्ते बुधोत्तमा: ॥ |
| ४०५ | मिथ्याभिमानो मूढस्य विद्याहीनस्य कस्यचित् ।<br>बुधैर्भाषणवेळायां स्वयं विलयमेष्यति ॥ |
| ४०६ | ऊषरक्षेत्रसदृशा विद्याहीना नरा भुवि ।<br>केवलं जनिमन्तस्ते न तेषां सत्तया फलम् ॥ |
| ४०७ | सूक्ष्मशास्त्रार्थविज्ञानमन्तरा देहपुष्टित: ।<br>किं वा प्रयोजनं नृणां मृण्मयी प्रतिमैव ते ॥ |
| ४०८ | पण्डिताश्रितदारिद्र्यात् नितरां खेददायिनी ।<br>भवेन्मूढाश्रिता सम्पत् नात्र कार्या विचारणा ॥ |
| ४०९ | अस्तु विद्याविहीनानां कुलं श्रेष्ठमुताधमम् ।<br>महिम्ना नाधिरोहन्ति ते तुलां बुधसत्तमै: ॥ |
| ४१० | मृगाणां मानवानां च यथास्ति महदन्तरम् ।<br>तथा विद्याविहीनानां सतां च ग्रन्थसेविनाम् ॥ |
| | |

| अधिकार ४२. श्रवणम् | |
|---|---|
| | |
| ४११ | श्रुत्वा यद् ज्ञायते तत्त्वं तदप्योकं भवेत् । |

| | |
|---|---|
| | सत्सु वित्तेषु बहुषु मुख्यमेतद्विभाव्यते ॥ |
| ४१२ | श्रोत्रं श्रवणरूपान्नविहीनं स्याद्यदा तदा ।<br>देयं देहस्य चाप्यन्नं श्रोत्राभावे कथं श्रुति ॥ |
| ४१३ | श्रोत्रैः श्रवणरूपान्नसेविनो भूगता अपि ।<br>हविर्भुग्भिरमर्त्यैस्तु भवेयुः सदृशा नराः ॥ |
| ४१४ | यदि नाध्ययनं साध्यं श्रुत्वा वा ज्ञानमाप्नुहि ।<br>तद् ज्ञानं साह्यदं खेदे करयष्टिसमं तव ॥ |
| ४१५ | वचांस्याचारशीलानां साह्यदानि सदा नृणाम् ।<br>पङ्कदेशे विचरतो हस्तालम्बनदण्डवत् ॥ |
| ४१६ | कणशो वापि तत्त्वार्थः श्रेतव्याः समये सति ।<br>असकृत् श्रवणात् तत्त्वं ज्ञातं सत् पूर्णतां व्रजेत् ॥ |
| ४१७ | बहुश्रुता बहुज्ञाश्च सन्तो मोहवशात् कचित् ।<br>अजानन्तोऽपि याथार्थ्ये न ब्रूयुर्मोहदं वचः ॥ |
| ४१८ | शास्त्रश्रवणमात्रेण श्रोत्रं भवति सार्थकम् ।<br>ग्राहकं त्वन्यशब्दानां श्रोत्रं बाधिर्यवन्मतम् ॥ |
| ४१९ | अपूर्वसूक्ष्मशास्त्रार्थश्रवणं यैः सदा कृतम् ।<br>ते विनीतवचोयुक्ता भवेयु र्न तथा परे ॥ |
| ४२० | श्रोत्रैर्नवरसास्वादमकृत्वा जिह्वया परम् ।<br>षड्सास्वादचतुरा जीवन्तोऽपि मृतैः समाः ॥ |

## अधिकार् ४३. ज्ञानसम्पत्तिः

| | |
|---|---|
| ४२१ | अनर्थोन्मूलने मूलसाधनं ज्ञानमिष्यते ।<br>रिपूणां दुष्प्रवेशं तदन्तःप्राकारवद्भवेत् ॥ |
| ४२२ | निगृह्य चञ्चलं चित्तं दुष्कृत्याद्विनिवर्त्य तत् ।<br>नियोजनं च सत्कार्ये ज्ञानप्राप्तेः फलं भवेत् ॥ |

| | |
|---|---|
| ४२३ | बहुभ्यो विषयान् श्रुत्वा तेषु य: क्षेमदायक: ।<br>विमृश्य तस्य निश्कर्षे साधनं ज्ञानमुच्यते ॥ |
| ४२४ | स्पष्टार्थकं सुविज्ञेयं ज्ञानी वाक्यमुदीरयेत् ।<br>श्रुत्वाऽन्यवचनं क्लिष्टमपि विद्याद्विमृश्य च ॥ |
| ४२५ | व्यस्ने च सुखे स्निग्धान् समभावेन पश्यति ।<br>महद्भि: स्नेहमाप्नोति ज्ञानवान् ज्ञानसाधनात् ॥ |
| ४२६ | सदाचारपरा लोका: येन यान्ति पथाऽनिशम् ।<br>प्रवर्तनं तमालम्ब्य ज्ञानशीलस्य लक्षणम् ॥ |
| ४२७ | पूर्वं भाविफलं ज्ञातुं समर्था ज्ञानिनो मता: ।<br>तद् ज्ञातुमसमर्थास्तु मन्तव्या ज्ञानवर्जिता: ॥ |
| ४२८ | ये न बिभ्यति ते मूढा दुष्कृत्यात् पापभीतिदात् ।<br>भीरुता पापकृत्येषु धीमतां प्रकृतिर्भवेत् ॥ |
| ४२९ | भाविशोकोन्मूलनैकदक्षाणां धीमतां पुरा ।<br>चित्तक्षोभकरं दु:खं न कदाचिद्भविष्यति ॥ |
| ४३० | विनान्यै: सकलैर्ज्ञानमात्रात् सर्वार्थवान्नर: ।<br>ज्ञानाभावे सर्वहीनो भवेत् सर्वार्थवानपि ॥ |

## अधिकार ४४. दोषषट्कनिराकरणम्

| | |
|---|---|
| ४३१ | काममोहक्रोधलोभमदमात्सर्यसंज्ञकै: ।<br>दोषै: षड्भ: विहीनस्य सम्पत् श्लाघ्या स्थिरा भवेत् ॥ |
| ४३२ | दातव्येष्वप्रदानं च पूजनीयेष्वपूजनम् ।<br>अस्थने हर्ष इत्येते राज्ञो दोषा: प्रकीर्तिता: ॥ |
| ४३३ | स्वल्पे दोषोऽपि सम्प्राप्ते तं मत्वा सुमहत्तरम् ।<br>महान्तो जागरूका: स्यु: जननिन्दाभयाकुला ॥ |
| ४३४ | दोषो एव जननां स्यु: शत्रवो नाशकारका: । |

| | |
|---|---|
| | दोषातीतैर्जनैर्भाव्यं दोषाभावो गुणा: खलु ॥ |
| ४३५ | आदावेव नरो दोषान् य: प्राप्तान् न निवारयेत् ।<br>विनश्येत् जीवितं तस्य तृणं वह्निगतं यथा ॥ |
| ४३६ | ज्ञात्वा स्वदोषान् तान् हित्वा परदोषनिवारणे ।<br>यतमानो महीपाल: कथं स्याद् दोषभाजनम् ॥ |
| ४३७ | अदत्वा धर्मकार्यार्थमभुत्तवा च स्वयं धनम् ।<br>रक्षतो लोभिनो नश्येत् पुरुषार्थत्रयं वृथा ॥ |
| ४३८ | दातव्येष्वप्रदानाख्यो यो दोषो लोभनामक: ।<br>नायं साधारणे दोष: षड्दोषेष्वग्रणी: किल ॥ |
| ४३९ | आत्मश्लाघापरो न स्यात् कारणे सत्यपि स्वयम् ।<br>निष्फलानि च कार्याणि मनसाऽपि न संस्मरेत् ॥ |
| ४४० | यदवाप्तुं वृणीषे त्वं एकान्ते भज भुङ्क्ष्व तत् ।<br>नो चेत् त्वदीयलक्ष्यस्य विघ्नं कुर्युर्विरोधिन: ॥ |

## अधिकार ४५. महत्साह्यम्

| | |
|---|---|
| ४४१ | वयोवृद्धैर्धर्मविद्भि: बुद्धिमद्भिर्महात्माभि: ।<br>कुर्यान्मैत्रीं महीपालो विमृश्य बहुधा बहु ॥ |
| ४४२ | प्राप्तं दु:खं निराकृत्य भाविदु:खनिवारणे ।<br>जगरूकेण विदुषा स्नेहं कुर्याच्च सेवया ॥ |
| ४४३ | महात्मन: समाश्रित्य स्ववशे तान् करोति य: ।<br>महच्भाग्यं तदेवास्य किमन्यैर्भाग्यकोटिभि: ॥ |
| ४४४ | आत्मनोऽपि वरिष्ठानां महतां पथि वर्तनम् ।<br>महद् बलं भवेद् राज्ञां चतुरङ्गबलै: किमु ॥ |
| ४४५ | विमृश्य सचिवो ग्राह्यो नेत्रतुल्यो नृपेण तु । |

| | |
|---|---|
| | यतोऽमात्यो राज्यभारं वहन् राज्ञः सहायकृत् ॥ |
| ४४६ | ज्ञानिनां वचनं श्रुत्वा स्वबुद्ध्या तदिमृश्य च ।<br>पालयन् पृथिवीपालः शत्रुभिर्नैव बाध्यते ॥ |
| ४४७ | स्खालित्ये कठिनैर्वाक्यैः दण्डयन्तं सुमन्त्रिणम् ।<br>यो राजा लभते तस्मिन् निर्वीर्याः किल शत्रवः ॥ |
| ४४८ | समये शिक्षकैः सद्भिः साङ्गत्यरहितो नृपः ।<br>शत्रुबाधाविहीनोऽपि स्वयमेव विनश्यति ॥ |
| ४४९ | विना मूलधनं लाभो व्यापारे नैव लभ्यते ।<br>महत्साह्यं विना राज्ञां तथा स्थैर्य सुदुर्लभम् ॥ |
| ४५० | अनेकशत्रुबाधातो दुःखं दशगुणान्वितम् ।<br>भुपो विन्देत सत्सङ्गं प्राप्तं यः सन्त्यजेन्नृपः ॥ |

## अधिकार् ४६. दुःसाङ्गत्यवर्जनम्

| | |
|---|---|
| ४५१ | महान्तो दुष्टसाङ्गत्यात् भीतास्तिष्ठन्ति दूरतः ।<br>दुष्टान् बन्धुसमान् कृत्वा नीचास्तुष्यन्ति तैः सह ॥ |
| ४५२ | भूगतं सलिलं भूमिभेदाद् भिन्नरसं यथा ।<br>तथा नरः सङ्गभेदाद् भिन्नभिन्नमतिर्भवेत् ॥ |
| ४५३ | सामान्यज्ञानजनने मनः कारणमिष्यते ।<br>अयं योग्यो न वेत्येतद् ज्ञानं साङ्गत्यहेतुकम् ॥ |
| ४५४ | विशेषशेमुषी भायादादौ चित्तनिबन्धना ।<br>विमर्शे सापि साङ्गत्यमूलैवेति स्थितिर्ध्रुवा ॥ |
| ४५५ | चित्तशुद्धिः कार्यशुद्धिरित्येतदुभयं नृणाम् ।<br>सत्साङ्गत्यवशादेव भवेदिति विभाव्यताम् ॥ |
| ४५६ | लोके शुद्धमनस्कानां शुद्धा स्याद् भाविसन्ततिः ।<br>सत्साङ्गत्यसमेतानां जायते सकलं शुभम् ॥ |

| | |
|---|---|
| ४५७ | प्रणिनां चित्तसंशुद्धया सम्पत् सञ्जायते ध्रुवम् ।<br>सत्साङ्गत्यान्मन:शुद्धया सह कीर्तिरपि ध्रुवा ॥ |
| ४५८ | मन:शुद्धि: पुण्यकृत्यात् स्वयं जायेत केषुचित् ।<br>सत्साङ्गत्यं चित्तशुद्धिं वर्धयेत् तादृशेष्वपि ॥ |
| ४५९ | आमुष्मिकं सुखं चित्तशुद्धया मन्प्राप्यते नरै: ।<br>सत्सङ्गति: सुखस्यास्य प्राप्तौ विघ्नं निवारयेत् ॥ |
| ४६० | सत्सङ्गतिसमं मित्रं न भवेत् सुखसाधनम् ।<br>दुसङ्गतिसम: शत्रुरपकर्ता न विद्यते ॥ |

## अधिकार ४७. विमृश्यकारिता

| | |
|---|---|
| ४६१ | व्ययमादौ ततश्चायं ततो लाभं च शाश्वतम् ।<br>कार्यरम्भे विमृश्याथ कार्यमारभ्यतां बुधै: । |
| ४६२ | परीक्ष्य सुगृहीतेन सन्मित्रेण विमृश्य च ।<br>स्वयं चालोच्य य: कुर्यादसाध्यं तस्य किं भवेत् ॥ |
| ४६३ | भाविलाभेच्छया हस्ते स्थितं मूलधनं बहु ।<br>बुद्धिमान्तो नरा नैव व्ययीकुर्वन्ति सर्वदा ॥ |
| ४६४ | "इयाँलाभ" इति स्पष्टमज्ञात्वा कर्मणि प्रजा: ।<br>सहसा न प्रवर्तन्ते मानहानिभयार्दिता: ॥ |
| ४६५ | कालं देशं बलं शत्रोरज्ञात्वा समराङ्गणम् ।<br>प्रविशन् पार्थिव: शत्रुवर्धक: स्यान्न घातक: ॥ |
| ४६६ | अकर्तव्यस्य करणं कर्तव्यस्य विसर्जनम् ।<br>इत्येतदुभयं नृणां विनाशास्पदमिष्यते ॥ |
| ४६७ | कार्यनिर्वहणोपायमादौ ज्ञात्वा क्रियां कुरु ।<br>प्रविश्य कार्ये नोपायचिन्तनं कार्यसाधकम् ॥ |
| ४६८ | बहूनां साह्यमाप्यापि स कार्यं न हि साधयेत् । |

| | |
|---|---|
| | उपायांश्चतुरो यस्तु न प्रयुङ्क्ते यथायथम् ॥ |
| ४६९ | परेषां च गुणान् सम्यक् ज्ञात्वा तेषु यथागतान् ।<br>नाचरेद्यस्तु तस्यस्युर्यत्ना दोषसमन्विता: ॥ |
| ४७० | निजस्थित्यनुरोधेन कुरु सर्वं विमृश्य च ।<br>न चेन्निन्देत् त्वां हि लोक: क्रियतां लोकसंग्रह: ॥ |

## अधिकार ४८. बलपरिज्ञानम्

| | |
|---|---|
| ४७१ | बलं स्वीकृतकार्यस्य बलं स्वस्य रिपोर्बलम् ।<br>बलं द्वयो: पक्षयोश्च परामृश्य प्रवर्तय ॥ |
| ४७२ | कार्यस्य साध्यतां तद्वदुपायानां बलिष्ठताम् ।<br>जानन् दत्तावधानो य: तेन सर्वमवाप्यते ॥ |
| ४७३ | "स्वबलं स्वल्पमि"त्येतद् विस्मृत्योत्साहचोदिता: ।<br>कार्यमारभ्य मध्ये तु विघ्निता बहवो भुवि ॥ |
| ४७४ | अकृत्वा च परै: स्नेहमज्ञात्वा बलमात्मन: ।<br>आत्मश्लाघापरा लोके नाशं शीघ्रमवाप्नुयु: ॥ |
| ४७५ | लघुपिञ्छं भारवस्तु भवेन्नात्र विचारणा ।<br>भारपूर्णे तु शकटे भवेदक्षस्य भञ्जनम् ॥ |
| ४७६ | वृक्षशाखाग्रमास्थाय ततोऽप्यारोढुमूर्ध्वत: ।<br>उद्यत: शाखया साकं भग्नप्राणोप्यध: पतेत् ॥ |
| ४७७ | स्वशक्तिमनतिक्रम्य धर्ममार्गानुसारत: ।<br>दानशीलस्य विंत्त तु न कदापि विनश्यति ॥ |
| ४७८ | आय: स्वल्पो यदि भवेत् न दोषस्तत्र विद्यते ।<br>आयाद् व्ययस्य चाधिक्ये महान् दोष: प्रसज्यते ॥ |
| ४७९ | व्ययीकरोति विंत्त य: स्वार्जितादधिकांशत: ।<br>जीविते तस्य सम्पत्तिराभासा न तु शाश्वती ॥ |

| | |
|---|---|
| ४८० | आयमार्गमनालोच्य परेषामुपकुर्वत: ।<br>जीविते तस्य सम्पत्ति: क्षीयते झटिति स्वयम् ॥ |

## अधिकार ४९. कालपरिज्ञानम्

| | |
|---|---|
| ४८१ | उलूको बलवानह्नि काकेनाल्पेन जीयते ।<br>जयैषिणस्तथा राज्ञ: काल: खलु निरीक्ष्यते ॥ |
| ४८२ | काले कर्म समारब्धं विचार्य च कृतं पुन: ।<br>अस्थिरामपि सम्पत्तिं बध्नात्येकत्र सुस्थिराम् ॥ |
| ४८३ | क्रियोपयुक्तकरणै: कार्यं काले करोति य: ।<br>साध्यते सुलभं तेन नासाध्यं भुवि किञ्चन ॥ |
| ४८४ | कृत्स्नामपि महीं भोक्तुं स शक्नोति महीतले ।<br>काले देशे च कर्माणि य: करोति समाहित: ॥ |
| ४८५ | कृत्स्नस्य जगतो वाञ्छा यदि स्यात् किन्नु चिन्तया ।<br>युक्तकालं प्रतीक्षस्व निष्क्रियस्त्वं भज क्षमाम् ॥ |
| ४८६ | राज्ञ: कालार्थिनो मौनाद् वर्तनं युद्धमन्तरा ।<br>मेषस्य युद्धत: पृष्ठगमनेन समं भवेत् ॥ |
| ४८७ | शत्रोरग्रे बुधा: क्रोधं विसृजेर्युन वै वहि: ।<br>अन्तर्निगूह्य ते कोपं काले स्यु: कार्यसाधका: ॥ |
| ४८८ | नाशकाले समायाते रिपो: शीर्षमघ: पतेत् ।<br>तावता मौनमास्थेयं क्षमया जयकांक्षिणा ॥ |
| ४८९ | कालेऽनुकूले सम्प्राप्ते तमलभ्यं विभाव्य च ।<br>तदैव कुरु कर्तव्यं तं कालं न हि द्रक्ष्यसि ॥ |
| ४९० | कार्यसाधनपर्यन्तं बकवत्तिष्ठ निष्क्रिय: ।<br>कुरु कार्यं क्षणात् काले चञ्च्वा मीनं बको यथा ॥ |

## अधिकार ५०. स्थलपरिज्ञानम्

| | |
|---|---|
| | |
| ४९१ | समरे निजसैन्यानां स्थपनार्हस्थलीं स्थिराम् ।<br>अनिश्चित्य न कुर्वीत युद्ध शत्रुं न द्वषयेत् ॥ |
| ४९२ | सुरक्षितस्थलस्थेन विशिष्टबलशालिना ।<br>यो जय: प्राप्यते राज्ञा स तु सर्वार्थसाधक: ॥ |
| ४९३ | लब्ध्वा सुरक्षितं देशमात्मानं चापि पालयन् ।<br>रणभूमिं विशन् राजा दुर्बलोऽपि बली भवेत् ॥ |
| ४९४ | ज्ञात्वा युक्तस्थलीं तत्र स्थित्वा समरकर्मणि ।<br>यो विशेद् भूपतिस्तस्य नष्टाशा: स्युर्विरोधिन: ॥ |
| ४९५ | अगाधसलिलावासो नक्र: सर्वान् जयेद् ध्रुवम् ।<br>स एव तीरमापन्नो हन्यते दुर्बलैरपि ॥ |
| ४९६ | महान्तो दृढचक्राश्च न यान्त्यम्बुनिधौ रथा: ।<br>महीतले न प्रयान्ति नौका जलधिगामिन: ॥ |
| ४९७ | विमृश्य विविधोपायान् स्थले युक्ततमे वरे ।<br>कार्यमाचरतो राज्ञ: चित्तधैर्यमलं जये ॥ |
| ४९८ | अल्पसैन्यवतो राज्ञो गुप्तस्थलमुपेयुष: ।<br>समक्षं बहुसैन्यानामीशोऽपि लयमाप्नुयात् ॥ |
| ४९९ | दुर्गस्थलविहीनोऽपि प्रभावरहितोऽपि च ।<br>जेतुं न शक्यो भूपाल: स्वस्थले निवसेद्यदि ॥ |
| ५०० | शूलहस्तमहावीरहन्तृदन्तयुतोऽपि सन् ।<br>पङ्कं विशन् मदगज: सृगालेनापि हन्यते ॥ |

## अधिकार ५१. विमृश्यविश्वसनम्

| | |
|---|---|
| | |
| ५०१ | धर्मकामार्थभीत्याद्यै: उपायै: सुपरीक्ष्य तान् ।<br>लब्धप्रत्ययवान् भूप: कार्ये भृत्यान् नियोजयेत् ॥ |
| ५०२ | निर्दोषित्वं कुलीनत्वं लज्जा पापेषु भीरुता । |

| | |
|---|---|
| | एतैर्गुणैतान् राजा विश्वसेन्निजसेवकान् ॥ |
| ५०३ | पूर्वोक्तदोषशून्येषु पण्डिताग्रेसरेष्वपि ।<br>विचार्यमाणेत्वज्ञानं नूनं द्रष्टुं हि शक्यते ॥ |
| ५०४ | दोषं गुणं वा कस्मिश्चित् स्थितं विज्ञाय तत्त्वत: ।<br>ग्राह्य: स्याद् गुणभूयिष्ठ: त्याज्यो विविधदोषभाक् ॥ |
| ५०५ | महत्वं कस्यचित् पुंसो नीचत्वमपरस्य च ।<br>ज्ञातुं तयोर्वृत्तिरेव निकषोपलतां व्रजेत् ॥ |
| ५०६ | न कुर्यात्प्रत्ययं बन्धुविंहीनेषु जनेष्विह ।<br>बन्धुबन्धविहीनत्वात् न निन्दां गणयन्ति ते ॥ |
| ५०७ | कृत्वा प्रत्ययमज्ञेषु तेषां कार्ये नियोजनात् ।<br>न केवलं कार्यहानिरज्ञतां विन्दते नृप: ॥ |
| ५०८ | उदासीनान् प्रत्ययेन य: कार्येषु नियोजयेत् ।<br>न केवलमयं नश्येत् किन्तु भाविपरम्परा ॥ |
| ५०९ | विमृश्य विश्वसेत् सर्वान् विचारानन्तरं पुन: ।<br>अविश्वासं विना तेषां युक्तं कार्येषु योजनम् ॥ |
| ५१० | अविमृश्यैव विश्वास: विमृष्टस्य परिग्रहे ।<br>अविश्वास: इतीत्येतदुभयं खेददायकम् ॥ |

## अधिकार ५२. विमृश्य कार्यकरणम्

| | |
|---|---|
| ५११ | शुभाशुभे परामृश्य शुभकार्यैककारिणम् ।<br>पुरुषं योजयेत् कार्ये निर्भयं पृथिवीपति: ॥ |
| ५१२ | आयमार्ग परामृश्य धनं सम्पाद्य भूरिश: ।<br>तद्रक्षको विना विघ्नं राजकार्ये नियुज्यताम् ॥ |
| ५१३ | ज्ञानं प्रीतिरकालुष्यं निराशा धनसञ्चये । |

| | |
|---|---|
| | गुणैरेतै: समायुक्तो राजकार्ये नियोज्यताम् ॥ |
| ५१४ | जिता गुणपरीक्षायां तत: स्थाने नियन्त्रिता: ।<br>अन्ते केचित् स्थानदोषात् जायन्ते दुष्टबुद्धय: ॥ |
| ५१५ | बुध्वोपायं विघ्नराशिमपोह्य कृतिसाधने ।<br>समर्थमन्तरा नान्यं राजकार्ये निवेशयेत् ॥ |
| ५१६ | कर्तुर्गुणं क्रियातत्त्वं कालस्याप्यनुकूलताम् ।<br>सम्यग्विज्ञाय कार्येषु नरो योज्यो नराधिपै: ॥ |
| ५१७ | अनेन हेतुना कार्यमेतत् कर्तुमयं क्षम: ।<br>इत्थमालोच्य तत्कार्ये स एव प्रेर्यतां नृपै: ॥ |
| ५१८ | स्वकार्यसाधनार्हश्चेत् कश्चित्तस्मिन् क्रियाभरम् ।<br>निक्षिप्य राज्ञा दातव्यं स्वातन्त्र्यं कार्यसाधने ॥ |
| ५१९ | बन्धुवत् स्वीकृतं कार्यं कुर्वन्तं प्रेमपूर्वकम् ।<br>दूरीकरोति दुर्वाधात् यस्तु तं विसृजेद्रमा ॥ |
| ५२० | तृप्तेषु कर्मकारेषु लोक: स्यात् क्लेशवर्जित: ।<br>तत्तर्पणविधौ राज्ञा यत्न: स्वीक्रियतां सदा ॥ |

## अधिकार् ५३. बन्धुप्रीति

| | |
|---|---|
| ५२१ | नष्टायामपि सम्पत्तौ सम्बन्धं पूर्वकालिकम् ।<br>स्मृत्वैव श्लाघनं लोके बन्धुलक्षणमुच्यते ॥ |
| ५२२ | प्रेमपूर्वकबान्धव्यं कस्यचिल्लभ्यते यदि ।<br>तदेव सम्पद: सर्वा: तस्मै यच्छेत् सदातना ॥: |
| ५२३ | प्रेमपूर्वकबान्धव्यरहितस्य हि जीवनम् । |

| | |
|---|---|
| | जलपूर्णतटाकस्य तीराभावसं भवेत् ॥ |
| ५२४ | बन्धुसाह्यकरो यस्तु सदा बन्धुभिरावृत: ।<br>तेन सम्पादितं वित्तं प्रयोजनकरं भवेत् ॥ |
| ५२५ | बन्धुनां धनदातारं प्रियभाषणतत्परम् ।<br>तं सर्वदा बन्धुवर्गास्तिष्ठन्ति परिवेष्टिता: ॥ |
| ५२६ | पृथिव्यां दानशौण्डस्य जितक्रोधस्य भूपते: ।<br>वशंवदा सदा तिष्ठेत् सकला बन्धुसन्तति: ॥ |
| ५२७ | काक: स्वीयान् समाहूय भक्षयेदार्जितं च तै: ।<br>स्वार्जितं बन्धुभि: साकं भुंङ्क्ष्व सम्पत्स्थिरा भवेत् ॥ |
| ५२८ | साम्यबुद्धिं विना राजा योग्यताभेदमूलकम् ।<br>विभज्य सर्वान् य: पश्येत् तस्य स्युर्बान्धवा: समे ॥ |
| ५२९ | स्थितं बान्धव्यमादौ यद् हेतुना केनचित् स्वत: ।<br>छिन्नं तद् हेतुनान्येन् पूर्ववत् पुनरेधते ॥ |
| ५३० | स्नेहं छित्वा गतं पश्चादागतं स्वार्यकरणात् ।<br>अलोच्य तं तु गृह्णीयादुपकृत्य महीपति: ॥ |

## अधिकार ५४. अविस्मरणम्

| | |
|---|---|
| | |
| ५३१ | सुखभोगासक्ततया कर्तव्यार्थस्य विस्मृति: ।<br>चण्डकोपोद्भवानर्थात्, अधिकानिष्टदा भवेत् ॥ |
| ५३२ | नरस्य नित्यदारिद्र्य यथा बुद्धिं विनाशयेत् ।<br>विस्मृति: समये तद्वनाशयेत् प्रथितं यशा: ॥ |
| ५३३ | पुरुषार्थचतुष्काप्त्यै यत्नमाचरतामपि । |

| | |
|---|---|
| | न ते सिध्यन्ति विस्मृत्या नेदं पार्थिवमात्रकम् ॥ |
| ५३४ | बाह्यदुर्गैर्नास्ति लाभो भये तु हृदये स्थिते ।<br>स्थितोऽपि विभवो व्यर्थो यदि स्याद्विस्मृतिर्नरे ॥ |
| ५३५ | प्रथमं विपदं प्राप्तां विस्मृत्या त्वनिवारयन् ।<br>खेदे समीपमायाते पश्चादुद्विजते नर: ॥ |
| ५३६ | अविस्मृतिसमाख्येन् गुणेन सदृशं वरम् ।<br>सर्वत्र सर्वकालेषु न तिष्ठेत् क्षेमदायकम् ॥ |
| ५३७ | असाध्यमिदमित्येतत् तस्य नास्ति कदाचन ।<br>अविस्मृत्या साधनीयं कर्म कर्तुं यतेत् य: ॥ |
| ५३८ | श्लाघितं नीतिशास्त्रज्ञै: क्रियतां कर्म सादरम् ।<br>अकुर्वाणस्य विस्मृत्या सप्त जन्म वृथा भवेत् ॥ |
| ५३९ | सन्तोषकाले गर्वेण कर्तव्यं यस्तु विस्मरेत् ।<br>स्मर्तव्यास्तेन विस्मृत्या पुरा नाशवशंगता: ॥ |
| ५४० | चिकीर्षितमविस्मृत्य जागरूकतयाऽनिशम् ।<br>तत्प्राप्त्यै यतमानेन वाञ्छितं साध्यते ध्रुवम् ॥ |

## अधिकार ५५. नीतिपरिपालनम्

| | |
|---|---|
| ५४१ | पक्षपातं विना राज्ञा माध्यस्थ्यमवलम्बता ।<br>यथाशास्त्रं दण्डदानं नीतिपालनमुच्यते ॥ |
| ५४२ | लोके जीवगणा: सर्वे वर्तन्ते वृष्टिकांक्षुण: ।<br>देशे जनास्तथा राज्ञ: कांक्षन्ते नीतिपालनम् ॥ |
| ५४३ | विप्रप्रवर्तितं वेदं धर्मं वेदेषु बोधितम् ।<br>लक्ष्यीकृत्य न्याय्यमार्गे रक्षणं राजलक्षणम् ॥ |

| | |
|---|---|
| ५४४ | स्ववशे मानवान् कृत्वा रक्षन्तं न्याय्यवर्त्मनि ।<br>महीपतिं प्रजा: सर्वा: प्रेक्षन्ते प्रीतिपूर्वकम् ॥ |
| ५४५ | नीतिशास्त्रानुरोधेन रक्षतो धर्मवर्त्मना ।<br>राज्ञो देशे कालवृष्टि: सस्यावृद्धिश्च जायते ॥ |
| ५४६ | शूलमात्रेण भूपालो जयं युद्धे न विन्दते ।<br>लभते नीतिदण्डेन जयं, दण्डो ऋजुर्यदि ॥ |
| ५४७ | नीतिदण्डेन सकलं जगद्य: पाति पार्थिव: ।<br>स एव नीतिदण्डस्तं पालयेन्नात्र संशय: ॥ |
| ५४८ | जनानां सुलभो भूत्वा तेषां श्रुत्वा च वाञ्छितम् ।<br>अयच्छन् पार्थिवो नीतिं सापवादो विनश्यति ॥ |
| ५४९ | शत्रुभ्यो रक्षणं नृणां, दण्डनादपराधिनाम् ।<br>पापापनोदनं, राज्ञां धर्म एव न पापदम् ॥ |
| ५५० | मृतिदण्डप्रदानं तु पापिनामाततायिनाम् ।<br>तृणानिर्मूलनसमं रूढसस्याभिवृद्धये ॥ |
| | |

## अधिकार् ५६. अनीत्यापालनम्

| | |
|---|---|
| ५५१ | जनहिंसापरो राजा न्यायातीतपदानुगा: ।<br>निर्घुणाद् घातकाच्चापि भुवि क्रूरतमो मत: ॥ |
| ५५२ | नीत्या पालयता राज्ञा प्रजाभ्यो वित्तयाचनम् ।<br>चोरेण शूलिना पान्थात् वित्तचौर्यसमं मतम् ॥ |
| ५५३ | देशे दिने दिने जातानन्र्थान् विमृशन् नृप: ।<br>परिहारमकुर्वाण: क्षीणराज्य: क्रमाद्भवेत् ॥ |
| ५५४ | भाव्यनर्थमनालोच्य न्याय्यमार्गविरोधत: ।<br>भूपस्य रक्षतो वित्तं नश्येत् तेन प्रजा अपि ॥ |

| | |
|---|---|
| ५५५ | अधर्मपालनोद्भूतक्लेशभाजां नुणां भुवि ।<br>अश्रुपात: श्रियं राज्ञो नाशयेदायुधात्मना ॥ |
| ५५६ | विन्दते सुस्थिरां कीर्तिं भूपो धर्मेण पालयन् ।<br>अनीत्या पालयन् राजा नष्टकीर्तिर्भविष्यति ॥ |
| ५५७ | दयाधून्यमहीपालपाल्यमानानृणां स्थितम् ।<br>वृष्टिहीनप्रदेशस्थजनास्थितिसमां विदु: ॥ |
| ५५८ | धर्ममार्गं समुल्लंघ्य रक्षत: पृथिवीपते: ।<br>देशे सतां तु दारिद्रयात् सम्पत्क्लेशाय कल्पते ॥ |
| ५५९ | पयोधरा न वर्षन्ति काले वृष्टिश्च निष्फला ।<br>धर्म्यं पन्थानमुल्लंघ्य नृपे शासति मेदिनीम् ॥ |
| ५६० | अरक्षति भुवं भूपे पथा न्यायानुरोधिना ।<br>विप्रा: क्षुतिं विस्मरेयु: न दद्यु: पशव: पय: |

## अधिकार ५७. निर्भयत्वम्

| | |
|---|---|
| ५६१ | दुष्ट विचार्य ताटस्थ्यात् पुनस्तं दोषकर्मण: ।<br>निवारयन् पालयेद् य: स भूपाल इतीर्यते ॥ |
| ५६२ | दण्डयेषु कठिनो भूत्वा दण्डनावसरे सति ।<br>लघु दण्डयतो राज्ञ: सम्पत्तिष्ठेदचञ्चला ॥ |
| ५६३ | अधर्मपालनाद्यस्य प्रजा: स्युर्भयाविह्वला: ।<br>अचिरादेव भूपाल: स लयं यास्यति ध्रुवम् ॥ |
| ५६४ | "अस्माकं पार्थिव: क्रूर" इति देशजनेरितम् ।<br>य एतच्छ्रुणुयाद्वाक्य> क्षीणायु: स विनश्यति ॥ |
| ५६५ | अप्रसन्नमुखो नृणामगम्य: सुलभेन य: ।<br>महीपालस्तस्य वित्तं भूताविष्टमिव वृथा ॥ |
| ५६६ | दाक्षिण्यगुणहीनस्य कटुवाक्यप्रयोगिण: । |

| | |
|---|---|
| | भूपस्य निखिलं वित्तमस्थिरं क्षीयते क्षणात् ॥ |
| ५६७ | कटुवाक्यमधर्मेण पालनं च महीभुजाम् ।<br>अरिविध्वंसनापेक्षिसत्त्वनिर्मूलहेतुकम् ॥ |
| ५६८ | अनालोच्यैव सचिवैः कृते कार्ये च विघ्निते ।<br>यः कुप्येत् सचिवान् राजा क्षीयन्ते तस्य सम्पदः ॥ |
| ५६९ | पूर्वं दुर्गमनिर्माय राजा युद्धभुवं गतः ।<br>विमेक्तोऽनुचरैः सर्वैर्भीतः सन् क्षयमाप्नुयात् ॥ |
| ५७० | नियुज्य विद्यारहितान् मुख्यस्थानेषु भूपति ।<br>पालयेद्यादि तर्ह्येतैः भूमेर्भारो निरर्थकः ॥ |

## अधिकार ५८. दाक्षिण्यम्

| | |
|---|---|
| ५७१ | तदैव भविता लोके प्रजानां सुखजीवनम् ।<br>दाक्षिण्यगुणसम्पूर्तिः यदा स्यात् पृथ्वीपतौ ॥ |
| ५७२ | लोको जीवति दाक्षिण्यात् तद्विहीननरा भुवि ।<br>यदि जीवन्ति तैर्भूमेः भार एव न संशयः ॥ |
| ५७३ | साहित्येन विना गानं यथा स्यान्न मनोहरम् ।<br>दाक्षिण्यवर्जितं कुत्स्नं जगत्तद्वन्निरर्थकम् ॥ |
| ५७४ | दाक्षिण्यगुणहीनस्य किं नेत्राभ्यां प्रयोजनम् ।<br>ते ह्यलंकाररूपेण लसतः केवलं मुखे ॥ |
| ५७५ | नेत्रस्यालंकरणं पुंसां दाक्षिण्यगुण इष्यते ।<br>तद्विहीनं तु नयनं धत्ते व्रणसमानताम् ॥ |
| ५७६ | स्थितेऽपि नेत्रे दाक्षिण्यगुणहीनो भवेद्यदि ।<br>अचञ्चलमहीरूढतरुरेव स मानवः ॥ |

| | |
|---|---|
| ५७७ | दाक्षिण्यवर्जिता मर्त्या नेत्रहीना मता भुवि ।<br>केचिन्नयनवन्तोऽपि सन्ति दाक्षिण्यसंयुता: ॥ |
| ५७८ | दाक्षिण्यगुणशीलस्य गच्छतो न्याय्यवर्त्मनि ।<br>पार्थिवस्य वशे कृत्स्नं जगद्वर्तेत सुस्थिरम् ॥ |
| ५७९ | कृतापराधिनि जने दाक्षिण्यं सम्प्रदर्श्य च ।<br>तद्द्वेषसहनं राज्ञां भवेत् स्वाभाविको गुण: ॥ |
| ५८० | सुहृद्दत्तं विषं चापि पीत्वा प्रत्ययकारणात् ।<br>मैत्रीं च तेन कुर्वन्ति दाक्षिण्यगुणकांक्षिण: ॥ |

## अधिकार: ५९. चारप्रेषणम्

| | |
|---|---|
| ५८१ | पार्थिवश्चारपुरुषं नीतिशास्त्रं तथोत्तमम् ।<br>इमे नेत्रसमे कृत्वा पालयेदनिशं भुवि ॥ |
| ५८२ | सर्वकाले सर्वदेशे प्रवृत्तान् विषयान् समान् ।<br>बुध्वा शीघ्रं चारमूलाद्रक्षणं राजलक्षणम् ॥ |
| ५८३ | स शत्रुवशमापन्न: पार्थिव: क्षयमाप्नुयात् ।<br>बुध्वापि विषयान् चारौ: य: पूर्वं न विचारयेत् ॥ |
| ५८४ | सेवकान् बान्धवान् शत्रून् सर्वान् वाचा च कर्मणा ।<br>विमृश्य राज्ञे विषयदाता चार इति श्रुत: ॥ |
| ५८५ | परदुर्ज्ञेयविषयान् निर्भीत: शत्रुसन्निधौ ।<br>गूढार्थगोपनपटु: चार इत्यभिधीयते ॥ |
| ५८६ | शास्त्रागारादिकं क्षिक्षुवेषो गत्वा विचार्य च ।<br>ज्ञातोऽपि शत्रुभिर्धीरो य: स्याच्चार: स गण्यते ॥ |
| ५८७ | अनेकगुप्तविषयान् बहिरानाय्य मेधया । |

ज्ञात्वा यथावद् भूपाय कथनं चारलक्षणम् ॥

५८८ चारणैकेन कथितमन्यचारेण चेरितम् ।
एकार्थकं यदि भवेत् गृह्यतां तत् त्यजेतरम् ॥

५८९ परस्परमसंवेद्यान् त्रयश्चारान् नियोज्य तु ।
त्रिभिरुक्तोऽपि विषय: समश्चेद् गृह्यतामयम् ॥

५९० चाराय देयं सन्मानं राज्ञा गुप्तं न तद् बहि: ।
नो चेद् गुप्तार्थविषय: सर्वैश्च विदितो भवेत् ॥

## अधिकार: ६०. उत्साहसम्पत्ति:

५९१ उत्साहहितो लोके सम्पन्न इति कथ्यते ।
तदभावे भवेद्रिक्त इतरै: सहितोऽपि स: ॥

५९२ उत्साहसदृशं वित्तं स्थिरं लोके न वर्तते ।
धनमन्यत्क्रमाच्छीघ्रं ध्रुवं विलयमेष्यति ॥

५९३ नष्टायामपि सम्पत्तौ स तु खेदं न विन्दते ।
उत्साहरूपसम्पत्त्या सदा य: सहितो भुवि ॥

५९४ अनाहूतापि लक्श्मीस्तं स्वयमन्विषय विन्दते ।
यस्मिन्नकुण्ठितोत्साहो विद्यते सर्वदा नरे ॥

५९५ दैर्घ्यं प्रसूननालस्य नीरागाधनिबन्धनम् ।
तथा जीवितवृद्धिश्च स्यादुत्साहनिबन्धना ॥

५९६ भूपेन चिन्त्यतां स्वीयमौन्नत्यं प्रति सर्वदा ।
कार्यं भवतु वा मा वा श्लाघ्यते यत्नवान्नरै ॥

५९७ औन्नत्यं न विमुञ्चन्ति बाणविद्धा अपि द्विपा: ।
तद्वदुत्साहवन्तोऽपि न विघ्नाद्विरमन्ति हि ॥

५९८ उत्साहवर्जितनृपा "वयं दानागुणान्विता: "
इति मत्वा न वै दोषमाप्नुवन्ति कदापि ते ॥

५९९ महाकायसमायुक्त: क्रूरदन्तसमन्वित: ।
गजेऽपि व्याघ्रमालोक्य भीत: सद्य: पलायते ॥

६०० नराणां बलमुत्साह: तद्विहीननरा द्रुमा: ।
आकारेणैव ते वृक्षा: निष्फलाश्च निरर्थका: ॥

## अधिकार: ६१. आलस्याभाव:

६०१ कुलदीपं प्रभायुक्तमालस्याभिहिंत तम: ।
क्रमेण समभिव्याप्य शमयेत् प्रभया विना ॥

६०२ आलस्यवशमापन्नो य: प्रयत्नविवर्जित: ।
कुलगौरवहानि: स्याद् दोषा: स्युस्तस्य जीविते ॥

६०३ अनर्थकरमालस्यं जडो य: कुरुते वशे ।
तन्नाशात्पूर्वमेवास्य कुलं विलयमाप्नुयात् ॥

६०४ यो वाऽऽलस्यगुणाविष्ट: शुद्धयत्नविवर्जित: ।
तस्य दोषा: सम्भवन्ति लीयते च कुलोन्नति: ॥

६०५ दीर्घनिद्रादीर्घसूत्रविस्मृत्यालस्यसंयुता: ।
नौकां मग्नोन्मुखां प्राप्ता इव नश्यन्ति ते ध्रुवम् ॥

६०६ स्वयं मैत्री भवतु वा महद्भि: चक्रवर्तिभि: ।
न कोऽपि लाभस्तेन स्यात् आलस्यगुणवान् यदि ॥

६०७ विशेषयत्नरहिता: कार्येष्वालस्यभाग्जना: ।
क्रूरवाक्यैर्विनिन्द्यास्ते भवन्ति सुहृदां पुर: ॥

६०८ आलस्याभिहितो दोष: सत्कुले जनुषं नरम् ।
यद्याप्नोति झाडित्येष: शत्रूणां वशमानयेत् ॥

६०९ कुलीनत्वं पौरुषं च तस्य स्याद्दोषवर्जितम् ।

आलस्यरूपदोषेण यो भवेन्न वशीकृत: ॥

६१० विष्णुस्त्रिविक्रमो भूत्वा मितवान् यज्जगत्त्रयम् ।
विन्देत् तज्जगत्सर्वमालस्यरहितो नृप: ॥

## अधिकार: ६२. प्रयत्नशीलत्वम्

६११ साध्यमिदमित्येतां मतिं त्यक्त्वा प्रयत्यताम् ।
स एव यत्नस्ते दद्यात् बलं कार्यसमापने ॥

६१२ जहाति तं नरं लोको य: कर्तव्यं परित्यजेत् ।
तस्मात् प्रयत्नशून्यत्वं मुञ्च कर्तव्यकर्मसु ॥

६१३ परोपकरणे बुद्धिस्तेषामेव प्रवर्तते ।
अकुण्ठितप्रयत्नाख्यगुणेन सहितास्तु ये ॥

६१४ परोपकारं कर्तुं न शक्नुयाद्यत्नवर्जित: ।
करवर्तिकृपाणोऽपि भीरु: किं कर्तुमर्हति ॥

६१५ य: सुखेच्छां परित्यज्य कर्मण्येव कृतादर: ।
स तु स्वीयजनक्लेशं वारयेत् स्तम्भतां गत: ॥

६१६ सम्पदं सर्वदा दद्यात् व्यवसायो महीभुजाम् ।
दारिद्र्य तस्य जनयेत् व्यवसायविहीनता ॥

६१७ अलक्ष्मी: स्यामला ज्येष्ठा निवसेदलसाश्रिता ।
आलस्यवर्जिते पुंसि वर्तते पद्मसम्भवा ॥

६१८ ज्ञात्वा यथावत्कार्येषु यत्न: स्वीक्रियतां त्वया ।
विधिना निष्फले यत्ने न निन्द्यस्त्वं भविष्यसि ॥

६१९ विधौ ते प्रतिकूलेऽपि मा यत्नं त्यज सर्वदा ।
अलब्धेऽपि फले कायक्लेशो नैव वृथा भवेत् ॥

६२० विनालस्यं कर्मलोपमन्तरा यत्नवान् नर: ।

प्रतिकूलं विघिं चापि स कदाचिद्विजेष्यति ॥

## अधिकार: ६३. औत्सुक्यम्

६२१ प्राप्तेऽपि व्यसने खेदं त्यक्तवोत्साहपरो भव ।
खापनोदनपटुरुत्साहानास्ति कश्चन ॥

६२२ निरर्गलागतं दु:कप्रावाहं बुद्धिमान्नर: ।
हृदये सुखरूपेण जानन् दु:खाद्विमुच्यते ॥

६२३ दु:खेष्वचञ्चलो भूत्वा नरो धैर्यगुणान्वित: ।
दु:खस्य दु:खं जनयन्नारब्धं कर्म साधयेत् ।

६२४ वृषभ: शकटे बद्धो यत्नाल्लक्ष्य> यथा व्रजेत् ।
व्यवसायपरस्तद्वद् दु:खं दूरीकरोत्यहो ॥

६२५ उपर्युपरि दु:खेषु प्राप्तेष्वपि मनोधृतिम् ।
यो विन्दते स वै मर्त्यो दु:खं दु:खस्य यच्छति ॥

६२६ धने लब्धेऽपि तल्लब्धमिति यस्तु न तुष्यति ।
दारिद्र्यं नष्टमित्युक्त्वा व्यसनं न स विन्दते

६२७ दु:खाश्रयो देह' इति ज्ञात्वा तत्त्वविदां वरा: ।
दु:खकाले समायते न मुञ्चन्ति मनोधृतिम् ॥

६२८ अनादृत्य सुखं प्राप्तं 'दु:खं स्वाभाविकं नृणाम्' ।
इति भावयतो दु:खं स्वप्रयत्नान्न जायते ॥

६२९ सुखानुभववेलायां मनसा यो न तत्स्पृशेत् ।
दु:खानुभववेलायां दु:खं तं नैव बाधते ॥

६३० शत्रुणापि श्लघनीयमौन्नत्यं प्राप्नुयादयम् ।
दु:खमापतितं यस्तु सुखरूपेण भावयेत् ॥

## अधिकारः ६४. अमात्यः

६३१ उचितः समयः, कार्यसाधिके सैन्यसम्पदौ ।
क्रियाप्रकारस्तच्छ्रैष्ठ्यमिमे मन्त्रिगुणाः स्मृताः ॥

६३२ सामर्थ्यं यत्नशीलत्वं कुलीनत्वं मनोधृतिः ।
विद्येति पञ्चभिश्चैतैः सहितः सचिवो मतः ॥

६३३ रिपुपक्षजनत्यक्ता स्वपक्षजनरक्षकः ।
गातानां पुनरानेता भवेत् सचिवसत्तमः ॥

६३४ सहेतुकं क्रियाकर्ता कर्तव्यार्थविमर्शकः ।
भावाविष्करणे धीरः सचिचश्रेष्ठ उच्यते ॥

६३५ राजधर्मे च निपुणः स्वशास्त्रार्थविशारदः ।
कालोचितमतिः कार्ये भवेत् सचिवसत्तमः ॥

६३६ यस्य स्वाभाविकं ज्ञानं शास्त्र्ज्ञानेन सङ्गतम् ।
मन्त्रिणस्तस्य पुरतः किं कुर्युः शत्रुवञ्चनाः ॥

६३७ नीतिशास्त्रप्रकारेण न युक्तं कार्यसाधनम् ।
देशकालानुरोधेन कार्यसाधनमुत्तमम् ॥

६३८ अशृण्वतः सतां वाक्यं स्वयं तत्त्वमजानतः ।
नृपस्य समये तत्त्वकथनं मन्त्रिलक्षणम् ॥

६३९ कुमार्गबोधकामात्यनिकटे वर्तनादपि ।
कोटिसप्ततिशत्रूणां मध्ये वासोऽपि साम्प्रतम् ॥

६४० स्मृत्वा यथावत्कार्याणि सम्यक् तत्कर्तुमुद्यतः ।
नैतानि पूर्णतां यान्ति सामर्थ्यं न भवेद्यदि ॥

## अधिकारः ६५. वाग्मित्वम्

६४१ वाग्मित्वगुणसम्पूर्त्या सचिव: श्रेष्ठ्यमाप्नुयात् ।
गुणमध्ये विशेषेण वाग्मिता राजते यत: ॥

६४२ वक्तुर्वचनभङ्गयैव यत: स्यातां शुभाशुभे +
आलोच्य सावधानेन तस्माद्वाक्यं प्रजुज्यताम् ॥

६४३ यद्वच: श्रुतमात्रेण जनानावर्जयेद् गुणै: ।
अश्रुतानां च शुश्रूषा भवेत् तत्तात्त्विकं वच ॥

६४४ वक्तृश्रोत्रोर्मनस्तत्त्वं ज्ञात्वा वचनमुच्यताम् ।
तादृग्वच:प्रयोगेण धर्मार्थौ भुवि सिद्धयत: ॥

६४५ विवक्षा ते यदि भवेदुच्यतां तादृशं वच ।
इतरेषां वचोभिश्च यज्जेतुं नैव शक्यते ॥

६४६ मनोऽनुकूलमन्येषामुक्तवा तेषां वचस्यपि ।
त्यक्तवा दोषान् भावमात्रग्रहणं मन्त्रिणां गुण: ॥

६४७ वादे कस्तं जेतुमिश: परमानसरञ्जकम् ।
विस्मृत्या रहितं धीरं वाक्यं य: समुदीरयेत् ॥

६४८ नानार्थानानुपूर्व्येण सग्रथ्य मधुरं वच: ।
प्रयुञ्जानस्य वचनं लोको गृह्णाति सादरम् ॥

६४९ निर्दुष्टं सार्थकं वाक्यं ये न जानन्ति भाषितुम् ।
वाक्यजालमनुस्यूतं वक्तुमेव हि ते क्षमा: ॥

६५० अधीतग्रन्थमन्येषां ये बोधयितुमक्षमा: ।
निर्गन्धफुल्लकुसुमै: ते भजन्ते समानताम् ॥

## अधिकार: ६६. क्रियाशुद्धि

६५१ समीचीनेन साह्येन सम्पत् केवलमाप्यते ।
यदि कर्म भवेत् सुष्ठु सर्वं तेन हि सिद्ध्यति ॥

६५२ इह कीर्तिः परे पुण्यं न सिद्धयेद्येन कर्मणा ।
सर्वदा तन्न कर्तव्यं मन्त्रिणा भूतिमिच्छता ॥

६५३ उपर्युपर्यात्मवृद्धिकांक्षायां यत्नमास्थितैः ।
त्यज्यतां तादृशं कार्यं यद्गौखविधातकम् ॥

६५४ प्राप्तोऽपि व्यसने तस्य निर्मूलनकृतेऽपि वा ।
निन्द्यं कार्यं न कुर्वन्ति विशुद्धमतयो जनाः ॥

६५५ पश्चात्तापकरं कार्यं न कुर्वीत कदाचन ।
प्रमादेन कृते चापि पश्चातापमतिं त्यज ॥

६५६ मातुर्बुभुक्षाशमनसङ्कटेऽपि समागते ।
सद्भिर्विगर्हितं वर्ज्यं कार्यं न हि समाचरेत् ॥

६५७ विधाय निन्दितं कार्यं सापवादं धनार्जनात् ।
विर्दुष्टकर्मजनितदारिद्र्य हि सतां वरम् ॥

६५८ न कुर्यान्निन्दितं कर्म तत् प्रमादात् क्रियेत् चेत् ।
कार्यवसानवेलायां दुःखमेव भवेत् ततः ॥

६५९ परहिंसाबलाल्लब्धं वित्तं मुञ्चेत् तमाश्रितम् ।
क्रमप्राप्तधनं नष्टमप्यन्ते मुदमर्पयेत् ॥

६६० वञ्चनामार्गसम्प्राप्तवित्तरक्षणकर्म तु ।
अपक्कामघटक्षिप्तजलरक्षणवद्भवेत् ॥

## अधिकारः ६७. क्रियादार्ढ्यम्

६६१ कर्तुर्मनसि यद्दार्ढ्यं तत्क्रियादार्ढ्यमीर्यते ।
सैन्यदुर्गादिदार्ढ्य तु नात्र दार्ढ्यपदेरितम् ॥

६६२ निषिद्धकर्मणस्त्यागो दैवात्तस्मिन् कृतेऽपि च ।
चित्तदार्ढ्यापरित्याग इतीमौ प्रकृते मतौ ॥

६६३ कर्मारब्धमितीत्येतदन्ते चेज्ज्ञायते परै: ।
दृढं भवति तत्, मध्ये ज्ञातं चेद् दु:खमापतेत् ॥

६६४ एवं कर्तव्यमित्येतद्वक्तुं शक्ता: समे भुवि ।
यथोक्तं कार्यकरणे समर्थो नास्ति कश्चन ॥

६६५ कार्यसाधनशीलस्य क्रियादार्ढ्यं तु मन्त्रिण: ।
महत्वजननाद्राज्ञ: सर्वैरपि महीयते ॥

६६६ चिकीर्षितप्रकारेण ये धीरा: कार्यसाधने ।
चिकीर्षितं फलं चापि प्राप्नुवन्ति तथैव ते ॥

६६७ महारथाक्षक्षुद्राऽऽणिसमा: सन्तो दृढक्रिया: ।
महत्वे नाकृतिर्हेतु: दार्ढ्यं स्यात्तत्र कारणम् ॥

६६८ प्रसन्नमनसा कार्ये प्रवृत्तेन फलेच्छया ।
आलस्यदीर्घसूत्रत्वमन्तरा तद्विधीयताम् ॥

६६९ अन्ते सुखप्रदं कार्यं कायक्लेशेषु सत्स्वपि ।
अवश्यमेव कर्तव्यं दृढचित्तसमन्वितै: ॥

६७० दार्ढ्ये स्थितेऽप्यन्यकार्ये स्वीकृते पूतकर्मणि ।
मनोदार्ढ्यविहीनांस्तु मानयन्ति न मानवा: ॥

## अधिकार: ६८. कार्याचरणप्रकार:

६७१ अनिवार्यमिदं चेति विमर्शन्निर्णये सति ।
आलस्यं नैव कर्तव्यमन्यथा व्यसनं भवेत् ॥

६७२ यदालस्येन कर्तव्यं तत्रालस्य प्रदर्श्यताम् ।
त्वरया करणीयं यत् तत्रालस्यं न शोभनाम् ॥

६७३ लब्धेऽवकाशो सर्वत्र कृत्वा कार्यं समाप्यताम् ।
तदभावे यदा यत्तु साध्यं तत् तत्र साध्यताम् ॥

६७४ आरब्धकार्ये यच्छिष्टं शिष्टं यद्धतशत्रुषु ।
द्वयं गूढं सदन्ते तु दहेच्छिष्टस्फुलिङ्गवत् ॥

६७५ द्रव्यकालक्रियाहेतुस्थलानामनुकूलताम् ।
पञ्चानामपि विस्पष्टं बुध्वा कार्यं विधीयताम् ॥

६७६ क्रियासम्बन्धिनो यत्नान् विघ्नान् सम्भावितान् तथा ।
अन्ते महाफलप्राप्तिं त्रयं बुध्वा क्रियां कुरु ॥

६७७ कार्ये प्राप्ते क्रियातत्त्वं बुध्वा पूर्वं तु सा क्रिया ।
यै: कृता भावमेषां च ज्ञात्वा कार्ये मतिं कुरु ॥

६७८ मत्तेभमेकं सम्प्रेप्य यथन्यो गृह्यते गज: ।
कृतेनैकेन कार्येण तथान्यदपि साध्यताम् ॥

६७९ सुहृदां साह्यकरणं न मुख्यं कुरु तच्छनै: ।
अप्रिया ये स्वशत्रोस्तै: सख्यं प्रथमत: कुरु ॥

६८० दुर्बला: स्वाश्रितजनत्रासनिर्मूलनेच्छया ।
बलिष्ठै: सह सम्बन्धं कुर्युरर्थं प्रदाय वा ॥

## अधिकार: ६९. दौत्यम्

६८१ बन्धुप्रीति: कुलीनत्वं राजवाञ्छितसद्गुणा: ।
अतैर्विशेषणैर्युक्तो दूतो भवितुमर्हति ॥

६८२ विमृश्य वाक्यकथनपाटवं ज्ञानमार्जवम् ।
राजप्रीतिरिमे दूतो त्रय: स्वाभाविका गुणा: ॥

६८३ निजराजजयोपायकथनं परभूपतौ ।
दूतस्य लक्षणं नीतिशास्त्रज्ञत्वं निगद्यते ॥

६८४ विमर्शसहिता विद्या रूपं स्वाभाविकी मति: ।
एतत्त्रितयसम्पन्नो दौत्यकर्म समाचरेत् ॥

६८५ ग्रथयित्वा बहून् शब्दानपशब्दानपोह्य च ।
पत्युएमनोऽनुकूलं यो वक्ति दूत: स कथ्यते ॥

६८६ नितीज्ञा: स्फुटवक्ता च धैर्यवान् रिपुसन्निधौ ।
कालानुकूलप्रज्ञावन् दूत: स्यात् शास्त्रसम्मत: ॥

६८७ कर्तव्यार्थपरिज्ञाता तत्कृतौ देशकालवित् ।
विमृश्य कथनीयार्थवक्ता स्याद् दूतसत्तम: ॥

६८८ अर्थकामोष्वनासक्ति: सर्वदा साह्यकारिता ।
मनोदार्ढ्य च दूतानां लक्षणं प्रोच्यते बुधै: ॥

६८९ देहवाक्यं प्रमाद्यापि न बूयोद्योऽरिसन्निधौ ।
राजवार्तामन्यराज्ञि वक्तुं युक्त: स एव हि ॥

६९० शत्रुबाधामवाप्तोऽपि निर्भय: शत्रुमन्निधौ ।
प्रतिप्रभाववक्ता य: तं दूतं ब्रुवते बुधा: ॥

## अधिकार: ७०. राजसेवा

६९१ सचिवो नातिदूरे स्यात् राज्ञो नात्यन्तसन्निधौ ।
शैत्यबाधानिवृत्त्यर्थं यथाग्निकटं गत: ॥

६९२ राजवाञ्छितवस्तूनि स्वयं लब्धुमानिच्छते ।
मान्त्रिणे पार्थिवो दद्यादखिलं तेन वाञ्छितम् ॥

६९३ आत्मरक्षणवाञ्छा चेत् राजाप्रीतिं तु मा भज ।
अप्रसन्ने महिपाले न शक्यं तस्य सांत्वनम् ॥

६९४ राज्ञि पश्यति चान्येषां श्रोत्रयोर्गुप्तभाषणम् ।
सहान्यैर्हास्यवचनं प्रयोक्तव्यं न मन्त्रिणा ॥

६९५ रहस्यं भाषते राजा यद्यन्येनैव तच्छ्रुणु ।

प्रश्नं न कुर्यात् किं वेति तेनोक्तं चेत् तदा श्रृणु ॥

६९६ ज्ञात्वेङ्गितं च कालं च भूपतेर्यत्तु वाञ्छितम् ।
अनिराकरणीयं तत् मन्त्री बूयान्मनोहरम् ॥

६९७ पृष्टोऽप्यर्थसम्युक्तं वाक्यं बूयान्महीपतौ ।
पृष्टोऽपि व्यर्थवचनं न वदेत् सचिव : स्वयम् ॥

६९८ 'कनिष्ठो वयसा बन्धुभूतोऽय' मिति भूपतौ ।
निर्लक्ष्यभावमुत्सृज्य दीयतां स्थानगौरवम् ॥

६९९ राजविश्वासपात्रोऽहमित्यनेनैव हेतुना ।
अनिष्टं भूपतेर्नैव कुर्यान्मन्त्री विशुद्धधी: ॥

७०० 'चिरात् परिचितो राजा ममे'ति ममतापर: ।
मन्त्री स्वातन्त्र्यमालम्ब्य नानिष्टं कार्यमाचरेत् ॥

## अधिकार: ७१. इङ्गितपरिज्ञानम्

७०१ मुखनेत्रगतैर्भवै: अनुक्तं चान्तराश्यम् ।
यो वेत्ति सचिवो लोकभूषणं स भवेद् ध्रुवम् ॥

७०२ परिचगतं भावमिङ्गितै: संशयं विना ।
ज्ञातुं समर्थो दैवेन तुल्य एव विभाव्यताम् ॥

७०३ मुखनेत्रस्पन्दनादिबाह्यचिह्नै: पराशयम् ।
यो वेत्ति तस्मै वित्तादि दत्वा तं स्ववशे कुरु ॥

७०४ परभावपरिज्ञाता चेङ्गितैर्भाषणादृते ।
आकारैरन्यतुल्योऽपि ज्ञानेनायं विशिष्यते ॥

७०५ मुखनेत्रगतं चिह्नं दृष्ट्वान्यस्य मनोगतिम् ।
अजानतां वृथा नेत्रे दर्शनैकप्रजोजने ॥

७०६ वर्णभेदं वस्तिनिष्ठं स्फटिको दर्शयेद्यथा ।
मनोगतं भावभेदं मुखं तद्वत् प्रदर्शयेत् ॥

७०७ 'जडं मुखं ज्ञानशून्य'मिति वादो न युज्यते ।
पुरुषस्य सुखं दु:खं ज्ञात्वा स्वेन प्रकाशनात् ॥

७०८ इङ्गिताद्भावावज्ञातुरग्रे त्वागत्य तिष्ठत: ।
यो वेत्ति हृदयं तस्मिन् दु:खस्य कथनं वृथा ॥

७०९ नेत्रदृष्ट्याऽऽशयज्ञाता मन्त्री यदि वशे भवेत् ।
सदसद्भावमन्यस्य तेन जानाति भूपति: ॥

७१० 'परभावपरिज्ञाने वयं निशितबुद्धय:' ।
इति वक्तुं स शक्त: स्यात् दृष्ट्या यो वेद् चाशयम् ॥

## अधिकार: ७२. सभास्वरूपम्

७११ समास्वरूपं विज्ञाय वक्तव्यार्थं विचार्य च ।
सभायां शब्दजालज्ञै: वक्तव्यं सद्गुणान्वितै: ॥

७१२ साभिकानां रुचिं बुद्ध्वा दोष: शब्दथियोर्यथा ।
न ज्ञायेत तथा स्पष्टं सभायामुच्यतां वच: ॥

७१३ सभिकानां तु रासिक्यमज्ञात्वा भाषणोद्यता: ।
असमर्थाश्च कथने निर्विद्याश्च मता: समै: ॥

७१४ पण्डितानां सभामध्ये स्वपाण्डित्यं प्रदर्श्यताम् ।
मूढानां पुरतो युक्तं न पाण्डित्यप्रदर्शनम् ॥

७१५ ज्ञानिनां भाषणात्पूर्वं सभायां स्वीतभाषणम् ।
अनारभ्य विनीतेन स्थिति: स्यादुत्तमो गुण: ॥

७१६ शास्त्रज्ञानां सभायां यो दुष्टशब्दानुदीरयेत् ।
मुक्तिमार्गच्युतेनासौ तुल्यो दुष्यत्वमाप्नुयात् ॥

७१७ शब्दतत्त्वपरिष्कारधुरीणानां सभाग्रत: ।
अधीतशास्त्रग्रन्थानां विद्या विभ्राजते भृशम् ॥

७१८ स्वतोऽर्थग्राहिणामग्रे पण्डितोत्तमभाषणम् ।
रूढसस्ये त्वालवाले जलसेचनवद्भवेत् ॥

७१९ विद्वत्सभायां सुश्पष्टं तत्त्वार्थकथने पटुः ।
प्रमाद्यापि न भाषेत कुपण्डितसभाङ्गणे ॥

७२० स्वतुल्यज्ञानिशून्यायां सभायां ज्ञानिभाषणम् ।
अशुद्धजलधाराग्रशीर्णामृतसमं भवेत् ॥

## अधिकारः ७३ सभाकम्पविहीनता

७२१ सभास्वभावविदुषां भयनापि सभाङ्गणे ।
न स्यात् स्खालित्यमेतेषां शब्दतत्त्वविदां नृणाम् ॥

७२२ पण्डितेष्वग्रगण्यास्ते श्लाघ्यन्ते सकलैरपि ।
अधीतं विदुषामग्रे विस्पष्टं यैर्निरूप्यते ॥

७२३ प्राणान् त्यक्तुं सन्ति सज्जा धैर्येण बहवो युधि ।
विद्वत्सदसि धैर्येण वक्तारो विरलाः किल ॥

७२४ यदधीतं त्वया शास्त्रं स्पष्टं सदसि तद्वद ।
अज्ञातं शास्त्रमन्येभ्यो ज्ञानिभ्यस्त्वं भज स्वयम् ॥

७२५ शब्दशास्त्रं पठित्वादौ, अर्थशास्त्रं ततः पठ ।
सभायामुत्तरं वक्तुं तद्धैर्यं जनयेत् तव ॥

७२६ मनोधैर्यविहीनस्य कृपाणो युधि निष्फलः ।
भीतस्य निष्फलं शास्त्रं सूक्ष्मज्ञानिसभाङ्गणे ॥

७२७ सभाभीरुजनाधीतशास्त्रं सदसि निष्फलम् ।
कृपाणो युद्धभूमिस्थनपुंसककरे यथा ॥

७२८ सत्सभायामनेकार्थकथने भीरुणा स्फुटम् ।

अधीतास्वपि विद्यासु सकलासु वृथैव ता: ॥

७२९ अधीतज्ञातविद्यांस्तान् विद्वद्गोष्ठयां च भाषितुम् ।
भीतानज्ञातविद्योभ्योऽप्यधमान् मन्यते जन: ॥

७३० अधीतविद्यान् सद्गोष्ठयां स्फुटं वक्तुं चकातरान् ।
जीवतोऽपि मृतप्रायान् लोको जानाति केवलम् ॥

## अधिकार: ७४. देश:

७३१ कृषिकर्मविदां श्रेष्ठै: स्वधर्मनिरतै: सदा ।
धनार्जनपरैर्वैश्यै: युक्तो देश इतीर्यते ॥

७३२ ईतिबाधाविरहितं नानावस्तुसमन्वितम् ।
देशान्तरजनश्लाघ्यं देशमाहुर्मनीषिण: ॥

७३३ देशान्तरादागतानां जनानां वहनात् स्वयम् ।
वस्तून्युत्पाध राज्ञे च दानाद् देश इति स्मृत: ॥

७३४ घोरव्याधिबुभुक्षादिरहितं रिपुबाधया ।
विमुक्तमेधमानं च ब्रुवते देशसंज्ञया ॥

७३५ भिन्नलक्ष्यवतां सङ्घरन्तश्छिद्रैरनर्थदै: ।
घातकै: क्षुद्रभूपैश्च मुक्तो देश: स कथ्यते ॥

७३६ परैरनाश्य: सततं क्वचित् प्राप्तोऽपि नाश्यताम् ।
समृद्धिसहितो देशो देशेषूत्तमतां व्रजेत् ॥

७३७ तटाकैर्दृढदुर्गैश्च पर्वतैर्निझरैस्तत: ।
नदीमि: पञ्चभिश्चाङ्ग: युक्तं देशं प्रचक्षते ॥

७३८ सम्पन्नीरोगताधान्यसमृद्धि: सुखजीवनम् ।
दुर्गश्च पञ्च देशस्य मण्डनानि भवन्ति हि ॥

७३९ यत्नं विना स्वतो वस्तुदाता स्याद् देशसत्तम: ।
अन्विष्य यतमानोभ्यो दाता देशो न चोत्तम: ॥

७४० उक्तसर्वगुणाढयेऽपि देशे नास्ति प्रयोजनम् ।
यदि राज्ञ: प्रजानां च मिथ: प्रीतिर्न वर्तते ॥

## \अधिकार: ७५.दुर्ग:

७४१ समर्थानां युयुत्सूनां राज्ञां दुर्ग: सहायद: ।
त्रस्तान्त:स्थितराज्ञां च दुर्गो भवति पालक: ॥

७४२ सलिलेन विशुद्धेन मरुभूम्या नगेन च ।
सुच्छायाढयनेनापि वृतो दुर्ग: समीर्यते ॥

७४३ औन्नत्यदैर्घ्यनिर्भेदस्थैर्यैर्युक्तं चतुर्विधै: ।
प्रकारं दुर्गशब्दएन ब्रुवते शास्त्रवेदिन: ॥

७४४ विशालप्रान्तदेशेन रक्ष्यक्षुद्रपथा युत: ।
प्राप्तारिधैर्यहन्ता च दुर्गशब्देन कथ्यते ॥

७४५ अप्राप्य: शत्रुबृन्दानां नानाहारसमन्वित: ।
स्वगतानां सुखवासप्रदोदुर्ग: प्रकीर्त्यते ॥

७४६ समये साह्यदा युद्धवीरा: स्युर्यत्र सर्वदा ।
सर्ववस्तुसमृद्धिश्च पत्रासौ दुर्गसंज्ञक: ॥

७४७ साक्षात्सैन्यप्रवेशन परित: ऐन्यवेष्टनात् ।
कैतवेनापि दुष्प्रापो दुर्ग इत्यभिघीयते ॥

७४८ परैरावेष्टिते दुर्गे स्वस्थानैकपरायणै: ।
रिपुवारणकृद्वीरै: वृतो दुर्ग: स कथ्यते ॥

७४९ स्थित्वैवान्त: परान् युद्धे जेतुं शक्तैभटोत्तमै: ।

प्राप्तो महत्त्वं ख्यातश्च दुर्गो भवति सार्थक: ॥

७५० पर्वोक्तगुणयुक्तोऽपिदुर्ग: किं वा करिष्यति ।
युद्धोपायसमर्थानां सान्निध्यं न भवेद्यदि ॥

## अधिकार: ७६.अर्थर्जनोपाय:

७५१ अनर्हानप्यर्हतमान् कर्तुं येन धनेने तु ।
शक्यते तादृहादिद्‌चत्तात्, अन्यत् किं सार्थकं भवेत् ॥

७५२ गुणिनं चाप्यर्थहीनं दूषयन्ति नरा भुवि ।
निर्गुणं चाप्यर्थवन्तं मानयन्ति जना: सदा ॥

७५३ अशाम्यो धनदीपोऽयं गत्वा सर्वत्र सर्वदा ।
स्वाश्रितानां विरोधाख्यमन्धकारं विनाशयेत् ॥

७५४ युक्तमार्गेण नीत्या च यद्धनं समुपार्जितम् ।
तत्तस्य धर्मं कामं च प्रददाति न संशय: ॥

७५५ दयाप्रीती परित्यज्य क्रियमाणं धनार्जनम् ।
नैवानन्दकरं भूयादिति मत्वा परित्यजेत् ॥

७५६ नाथहीनं धनं घट्टशुल्कमूलागतं धनम् ।
जितारिसविधावाप्तकरो राज्ञां धनं भवेत् ॥

७५७ आकिश्चने जायमानं दयारूपं शिशुं स्वयम् ।
धनरूपोपमाता तु वर्धयेत् पोषयेदपि ॥

७५८ प्रविशेत् स्वीकृते कार्ये निर्भीतो धनहस्तवान् ।
गजयुद्धं नगारूढो यथा निर्भयमीक्षते ॥

७५९ क्रूरायुधो वित्तसम: शत्रुगर्वविनाशक: ।
द्रष्टुं न शक्यते लोके तस्माद्धनमुपार्जय ॥

७६० सम्पाद्य पुष्कलं वित्तं धर्ममार्गेण तिष्ठत: ।

अर्थकामौ स्वतस्तस्य सिद्ध्यत: पृथिवीतले ॥

## अधिकार: ७७. सैन्यप्रयोजनम्

७६१ चतुरङ्गसमायुक्तं मृतिभीतिविवर्जितम् ।
सैन्यं जयप्रदं राज्ञामुत्तं भाग्यमुच्यते ॥

७६२ विपत्काले स्वयं शीर्णं भूत्वापि धृतिमत्तया ।
स्थातुं शक्नोति तत् सैन्यं यन्मूलबलसंज्ञितम् ॥

७६३ मृषका मिलिता: शब्दं कुर्वन्तु भुजगान्तिके ।
वृथा तद् भुजगोच्छ्वासस्पर्शान्नश्यन्ति ते क्षणात् ॥

७६४ अप्रधर्ष्या परैर्नैव शक्या वञ्चयितुं परै: ।
परम्परागता धैर्ययुता सेनेति कथ्यते ॥

७६५ युद्धं करोतु कुपित: स्वयमागत्य चान्तक: ।
स्थातुं धैर्येण तस्याग्रे या शक्ता सैव वाहिनी ॥

७६६ वीर्यं मानं तथा पूर्ववीराणां मार्गगामिता ।
राजविश्वसपात्रत्वं चत्वार: सैन्यगा गुणा: ॥

७६७ प्राप्तारिवारणोपायं बुद्ध्वा व्युहं विद्याय च ।
रिपुसैन्यविनाशाय प्रस्थानं सैन्यलक्षणम् ॥

७६८ पराभिघातसहनं युद्धकर्मप्रवीणता ।
अभयं मास्तु वा व्यूहमात्रात् सेना वरा भवेत् ॥

७६९ यजमानेष्वविश्वासो दारिद्र्यमधिकं तथा ।
द्रव्यं न स्याद्यादि तदा स्वल्पा सेनापि जेष्यति ॥

७७० चिरानुभवशीलैश्च वीरैर्युक्तापि वाहिनी ।
सेनापतिविहीना सा महिमानं न विन्दते ॥

## अधिकार: ७८. सेनादार्ढ्यम्

७७१ बहवोऽस्मत्पतेरग्रे हता: पाषाणतां गता: ।
अस्मद्भूपपुरो नैव  स्थातव्यं भोश्च शात्रवा: ॥

७७२ अमोघं बाणमुत्सृज्य शशे प्राप्तो जयो वृथा ।
गजे प्रयुक्तबाणस्तु मोघोऽपि स्याज्जयावह: ॥

७७३ अरिभिस्सह निर्भीत्या योधनं वीरलक्षणम् ।
प्राप्ते खेदे रिपो: साह्यकर्ता वीर्यवतां वर: ॥

७७४ स्थितं शूलं गजे मुक्त्वा समीपस्थे गजान्तरे ।
अन्वेष्टाऽन्यस्य शूलस्य वक्ष:स्थं प्राप्य तुष्यति ॥

७७५ रिपुशूलागमं रोषात् पश्यतो नयानद्वयम् ।
सनिमेषं यदि भवेत् तत् पराजयलक्षणम् ॥

७७६ निजोरसि मुखे बाणताडनं त्वनवाप्य तु ।
अतीतान् दिवसान् युद्धे वीरो व्यर्थान् हि मन्यते ॥

७७७ स्थिरकीर्तिकृते युद्धे प्राणानपि विमुञ्चताम् ।
पादबद्धा शृङ्खला स्यात् अलङ्कारप्रयोजना ॥

७७८ प्राणान् तृणसमान् मत्वा प्रविशन्तो रणाङ्गणम् ।
वीरा भूपैर्वारिताश्च विरमन्ति न ते तत: ॥

७७९ स्वप्रतिज्ञाभङ्गभिया समरे मर्तुमिच्छत: ।
वीरस्य दण्डनं दातुं को वा शक्तो भवेद् भुवि ॥

७८० स्वीयं भूपं चाश्रुपातपर्वकं शेदयन् भट: ।
मृतश्चत् प्रार्थनापूर्वं मृतिनूनमवाप्यताम् ॥

## अधिकार: ७९. स्नेह:

७८१ आर्जनीयं स्नेहसमं श्रेष्ठं वस्तु न विद्यते ।
शत्रुभ्यो रक्षकं वस्तु स्नेहादन्यद् भवेत् किमु ॥

७८२ स्नेहो बुद्धिमता साकं वर्धते पूर्णचन्द्रवत् ।
बुद्धिहीनैः कृतः स्नेहः क्षीयते क्षीणचन्द्रवत् ॥

७८३ गुणिभिस्तु कृतः स्नेहः क्रमेणानन्ददायकः ।
सदर्थः पथनाद्यद्वत् क्रमशो मोददायकः ॥

७८४ परस्परकृता मैत्री न हि तोषाय केवलम् ।
स्खालित्ये सुहृदस्तस्माद् वारणं सख्यमुच्यते ॥

७८५ मैत्र्याः परिचयो हेतुः नापि सेशैकवर्तिता।
उभयोर्भावसाम्यं तु मैत्रीमुत्पादयेत् तयोः ॥

७८६ मैत्री मुखविकासेन केवलं न हि जायते ।
हृदयस्य विकासोपि मैत्र्यां मुख्यमपेक्ष्यते ॥

७८७ निवर्त्य निन्दितात् मार्गात् सन्मार्गे तं प्रवेश्य च ।
दुःखे प्राप्ते तुल्यभागभागिता स्नेहलक्षणम् ॥

७८८ स्त्रस्तं वस्त्रं स्वतो गत्वा यथा गृःणाति वै करः ।
तथा दुःखे स्वयं साह्यकरणं सख्यमुच्यते ॥

७८९ सर्वदा सर्वमार्गेण चैकरूपतया मुदा ।
साह्यं कृत्वा रक्षणं तु मैत्र्याः कोष्ठति कथ्यते ॥

७९० 'इयान् स्नेहस्तस्य मयि, तथा तस्मिन ममापि च' ।
एवं विशिष्य कथनात् स्नेहे नास्ति विशिष्टता ॥

## अधिकारः ८०. स्नेहपरीक्षा

७९१ स्नेहे कृते पुनस्तस्य परित्यागो न युज्यते ।

तस्मादनालोच्य मैत्रीकरणं जनयेत् व्यथाम् ॥

७९२ असकृद्दबहुधा चर्चामकृत्वा कृतमित्रता ।
मरणान्तकरं दु:खमान्तं तस्मै प्रयच्छति ॥

७९३ कुलीनत्वं गुणं दोषं बन्धुपालनशीलताम् ।
विमृश्य सम्यक् ज्ञात्वाऽथ मैत्रीं केनचिदाचर ॥

७९४ कुले महति सम्भृतमपवादभयान्वितम् ।
कुरु मित्रं वाञ्छितार्थप्रदानेनापि सर्वदा ॥

७९५ कटुवाक्यं प्रयुज्यापि दुर्मार्गाद् यो निवारयेत् ।
लोकज्ञानवता तेन विमृश्य स्नेहमाचर ॥

७९६ स्नेहतत्त्वं परिज्ञातुं खेद: स्यान्मानदण्डवत् ।
तस्मात् दु:खस्य सम्प्राप्तिरपि क्षेमाय कल्पते ॥

७९७ प्रमादाद् बुद्धिहीनेन साकं स्नेहस्य सम्भवे ।
ज्ञात्वा तस्य परित्यागात अन्यो लाभो न वर्तते ॥

७९८ उत्साहजनकात् कायोदन्यकार्ये विमुच्यताम् ।
तथा मैत्री न कर्तव्या खेदे साह्यमकुर्वता ॥

७९९ उपकारं विपत्कालेऽप्यकुर्वाणस्य मित्रता ।
स्मृता मरणकालेऽपि निर्दहेच्चित्तमुग्रत: ॥

८०० निर्दुष्टपुरुषै: साकं नूनं मैत्री विधीयताम् ।
गुणहीननरस्नेहं दत्वाऽर्थं वा परित्यज ॥

## अधिकार: ८१. प्राक्तनस्नेह:

८०१ चिरस्निग्धेन सौहार्दत् कृतं दोषं गुणं तथा ।
सोढ्वा तथैव स्वीकार: चिरस्नेहस्य लक्षणम् ॥

८०२ यथेच्छं मित्ररचितं स्नेहस्याङ्गं तदिष्यते ।
तस्मात् तत्कृतकार्यस्य स्वीकृतिर्महतां गुण: ॥

८०३ स्वन्त्र्यात् मित्ररचितं कार्यं नाङ्गीक्रियेत् चेत् ।
तेन साकं कृता मैत्री तदा व्यर्था भविष्यति ॥

८०४ स्ववाञ्छितं च स्वातन्त्र्यात् सुहृत् कुर्याद्यदि स्वयम् ।
अङ्गीकृत्य च तत्कार्यश्लाघनं महतां गुण: ॥

८०५ स्वातन्त्र्यमथवा ऽज्ञत्वं वक्तव्यं तत्र कारणम् ।
स्ववाञ्छितविरोधेन सुहृत् कार्यं करोति चेत् ॥

८०६ पुरा परिचितं मित्रं खेदे प्राप्तेऽपि तत्कृते ।
न कदाचिद्विमुञ्चन्ति स्नेहधर्मवशंगता: ॥

८०७ प्रेम्णा चिरात् स्नेहवद्भि: कदाचित् खेददायके ।
कार्ये कृतेऽपि सुहृदां तेषु प्रीतिर्न हीयते ॥

८०८ पूर्वमित्रकृतं दोषमुच्यमानं परैरपि ।
अश्रुण्वतो मित्रकृतो दोष: सुदिनतां व्रजेत् ॥

८०९ स्वातन्त्र्येण चिरान्मत्रीं कुर्वता केनचित् सह ।
सौहार्दं न त्यजेद्यस्तु लोकस्तं बहु मानयेत् ॥

८१० कृतेऽपि दोषे सौहार्दत् सोढ्वा तं सुहृद: स्वयम् ।
य: स्याच्छ्रेष्ठगुणोपेत: श्लाघ्यते रिपुणापि स: ॥

## अधिकार: ८२. निर्गुणजनमैत्री

८११ दुर्गुणा: प्रीतिसम्पन्ना इव कुर्युश्च मित्रताम् ।
त्यागो दुर्गुणमैत्र्यास्तु वर: स्यात् तस्य वर्धनात् ॥

८१२ स्वार्थाय कुर्वत: स्नेहं कार्यन्ते तद्विमुञ्चत: ।
असमथस्य सौहार्दं सर्वदा निष्प्रयोजनम् ॥

८१३ धनैकलक्ष्या गणिका: तस्करा: परवञ्चका: ।
लाभैकलक्ष्या: स्निग्धाश्च त्रयस्तुल्यगुणान्विता: ॥

८१४ पतिं भूमौ पातयित्वा धावता वाजिना समम् ।
सुहृत् साहयं न कुर्याच्चेत् ऐकान्त्यं वरमिष्यते ॥

८१५ अप्रयोजकरा नीचजनमैत्री विगर्हिता ।
तादृशस्नेहकरणात् स्नेहभावो वर: किल ॥

८१६ मूढै: साकं दृढस्नेहकरणात्, ज्ञानिभि: सह ।
विरोध: कोटिसंख्याकलाभं नूनं प्रयच्छति ॥

८१७ वहिर्हास्यपरै: साकं मैत्र्यां यज्जायते सुखम् ।
रिपुमूलसुखं तस्मात् दशकोटिगुणाधिकम् ॥

८१८ सुसाध्यकार्ये दुस्साध्यमिव य: सुहृदाचरेत् ।
तेन साकं स्थितां मैत्रीमनुत्तवैव परित्यज ॥

८१९ उक्त्वैकं वचसा कार्यमन्यत् कोयेन कुर्वता ।
मैत्री कृता तु स्वप्नेऽपि व्यसनं जनयिष्यति ॥

८२० गेहे रहसि संस्तुत्य सभायां जनमण्डले ।
मैत्री निन्दयता साकं सर्वथा न विधीयताम् ॥

## अधिकार: ८३. आन्तरस्नेहशून्यता

८२१ हार्दस्नेहविहीनस्य बाह्यस्नेहं वितन्वत: ।
मैत्री भग्ना भवेत् स्वर्णमय:खण्डगतं यथा ॥

८२२ चित्ते सौहार्दहीनस्य मित्रवन्नटतो बहि: ।
सौहार्दमङ्गनाचित्तसमं परिणतं भवेत् ॥

८२३ अधीतेष्वपि शास्त्रेषु हार्दमैत्र्या प्रवर्तनम् ।
नैव साध्यं भवेत्तेषां ये भवन्ति विरोधिन: ॥

८२४ बहिर्हास्यमुखो भूत्वा चित्ते द्रोहं चिकीर्षत: ।
वञ्चकस्य तु सौहर्दं दूरे कुरु भयान्वित: ॥

८२५ कृत्वान्यभावं मनसि स्नेहमाचरतो बहि: ।
श्रुत्वा वार्तां च कार्येषु प्रवृत्तिर्न वरा मता ॥

८२६ विरोधिनो मित्रसमं हितं वाक्यं ब्रुवन्तु वा ।
अथापि तद्वचोभङ्ग्या तत्त्वं ज्ञायेत शीघ्रत: ॥

८२७ प्राप्यापि नम्रतां चाप: स्वभावाद् दु:खदो यथा ।
विनयाढ्यं शत्रुवाक्यं तथानर्थकरं भवेत् ॥

८२८ शत्रोरञ्जलिमध्येऽपि छन्न: स्यात् कठिनायुध: ।
तथा शत्रोरश्रुपात: क्रूरायुधसमो भवेत् ॥

८२९ भूत्वा बहि: स्निग्धसमो दूषयेद् हृदयेन् य: ।
तमेव मार्गमाश्रित्य तस्य मैत्रीं विनाशय ॥

८३० शत्रुभि: सह मैत्र्यां च प्रसक्तायां मुखे परम् ।
प्रसर्श्य मैत्रीं हार्दां तां मैत्रीं छिन्धि निरन्तरम् ॥

## अधिकार: ८४. मौढ्यम्

८३१ क्षेमदायककार्यस्यपरित्यागस्तथैव च ।
अनर्थप्रदकार्यस्य स्वीकारो मौढ्यलक्षणम् ॥

८३२ नानाविधेषु मौढ्येषु मौढ्यं तच्छिखरायते ।
यच्छास्त्रनिन्दिते हेये दुराचारे तु भोग्यधी: ॥

८३३ लज्जाविहीनता प्रेमशून्यता श्रेष्ठवस्तुनि ।
नैराश्यं निर्विवेकत्वमिमे मौढ्यगुणा मता: ॥

८३४ शास्त्रण्यधीत्य तत्त्वार्थान् बुध्वा चोक्त्वा परान् प्रति ।
यस्तु नाचरते तेन समो मूढो न विद्यते ॥

८३५ यत्पापं नरकं दद्यात् भावि सप्तसु जन्मसु ।
तत्पापमखिलं म्ढ: करोत्यत्रैव जन्मनि ॥

८३६ अजानता क्रियातत्त्वं मूढेनारब्धकर्म तु ।
विघ्नितं नैति पूर्णत्वं कर्तारमपि नाशयेत् ॥

८३७ मूढस्य यदि लभ्येत् धनं तेन परे जनाः ।
प्राप्नुयुः सकलं सौख्यं न लाभो बन्धुमित्रयोः ॥

८३८ मूढो धनं प्राप्नुयाच्चेत् पित्तस्य पिबतः सुराम् ।
या तून्मादकरावस्था मूढः प्राप्नोति तां दशाम् ॥

८३९ मूढैः साकं वियोगेन दुःखं कस्यापि नोद्भवेत् ।
तस्मान्मूढेन मैत्री तु भवेदानन्दायिनी ॥

८४० अमेध्यस्पृष्टपादस्य पर्यङ्के क्षालनं विना ।
निक्षेपतुल्यं, मूढस्य विद्वद्गोष्ठीप्रवेशनम् ॥

## अधिकारः ८५. अल्पज्ञत्वम्

८४१ विद्यमानेष्वभावेषु ज्ञानाभावो व्यथाकरः ।
अन्याभावान् वेत्ति लोको णाभावत्वेन् सर्वदा ॥

८४२ अल्पज्ञः प्रीतिसंयुक्तो धनमर्पयनीति यत् ।
न तत्रान्यत् कारणं स्याद् गृहीतुः पुण्यमन्तरा ॥

८४३ यावान् खेदः शत्रुवर्गैरुत्पद्येत ततोऽधिकम् ।
प्राप्नुयुः खेदमल्पज्ञाः स्वीयाज्ञानबलात् स्वयम् ॥

८४४ 'ज्ञानवानहमस्मी'ति यो वाज्ञानकृतो मदः ।
स एवाल्पज्ञशब्देन प्रकृते सम्प्रकीर्त्यते ॥

८४५ अल्पज्ञो यदि तु ब्रूयादनधीतमधीतवत् ।
तदा क्षुण्णमधीतेऽपि विषये संशयो भवेत् ॥

८४६ स्वदोषवरणे यत्नहीनः स्वल्पमतिर्नरः ।
मुख्यं गोप्यं स्थलं त्यक्त्वा यथान्याच्छादको भवेत् ॥

८४७ परोक्तगोपनीयार्थान् प्रमादादीरयन् बहि: ।
अल्पज्ञ: स्वस्य नानर्थान् स्वयमेव समानयेत् ॥

८४८ सत्कार्यं य: परैरुक्तं न कुर्याद्वेत्ति न स्वयम् ।
तस्याल्पबुद्धे: प्राणा: स्यु: आन्तमामयरूपिण: ॥

८४९ अल्पज्ञस्योपदेष्टा तु स्वयमल्पो भवेन्नर: ।
अल्पज्ञो मूढविश्वासाद् भासते ज्ञानवानिव ॥

८५० अस्तीति सद्भिरुक्तार्थान् नास्तीत्येव वदेच्च य: ।
मर्त्यरूपागतं भूतं तं मन्यन्ते नरा भुवि ॥

## अधिकार: ८६. भेदबुद्धि:

८५१ समेषां प्राणिवर्गाणामितरै: प्राणिभि: सह ।
दुर्गुणं मेलनाभावरूपं भेदो विवर्धयेत् ॥

८५२ अनिच्छन् सङ्गमं कश्चित् करोत्वन्यस्य चाप्रियम् ।
तस्याप्यनिष्टकरणान्निवृत्ति: श्लाघ्यते नृणाम् ॥

८५३ हृदयाद्भेदभावाख्यरोगं दु:खप्रदायकम् ।
बहिर्निष्कासयन् कश्चित् शाश्वतीं कीर्तिमश्नुते ॥

८५४ दु:खानामादिमं दु:खं भेदज्ञानाभिधं नर: ।
नाशयन् स्वयमाप्नोति सुखानामुत्तमं सुखम् ॥

८५५ भेदज्ञानाख्यदोषेण ये भवेयुर्न दूषिता: ।
तान् जेतुं भुवि शक्ता: स्यु: केवाऽस्मिन धरणीतले ॥

८५६ भेदबुद्धिं समालम्ब्य वर्तनं वरमित्यपि ।
तिष्ठतो जीविते सम्पत् क्षीयते नश्यति स्वयम् ॥

८५७ भेदज्ञानाख्यदुर्बुद्धिसमेता जयदायकान् ।
नीतिशास्त्रोक्ततत्त्वार्थान् ज्ञातुं न प्रभवन्ति ते ॥

८५८ भेदबुद्धिं ये त्यजन्ति तेषां भाग्यं विवर्धते ।
वशा ये भेदभावस्य ते त्वनर्थानवाप्नुयु: ॥

८५९ श्रेय:सम्प्राप्तिवेलायां न स्मेरेद्भेदभावनाम् ।
अश्रेय:प्राप्तिवेलायां भेदबुद्धिं ध्रुवं त्यजेत् ॥

८६० भेदज्ञानेन चैकस्य बह्वनर्था भवन्ति हि ।
सौहार्दान्निितिरूपाख्यभाग्यं जायेत कस्यचित् ॥

## अधिकार: ८७. शत्रुनिर्णय

८६१ आत्मनोऽपि बलाढ्यैस्तु वैरभावो विमुच्यताम् ।
न त्याज्यं सर्वदा वैरं स्वस्मादल्पबलान्वितै: ॥

८६२ स्वाश्रितेषु प्रीतिहीनो सैन्यादिबलवर्जित: ।
स्वयं च बलहीनश्चेत् कथं शत्रून् विजेष्यति ॥

८६३ भेतव्ये भयहीनस्य ज्ञातव्यं चाप्यजानत: ।
अदातुर्मित्रहीनस्य सुलभा शत्रुवश्यता ॥

८६४ सर्वत्र सर्वदा सर्वै: स जेतुं सुलभो भवेत् ।
य: क्रोधवशमापन्नस्त्वशक्तश्चित्तनिग्रहे ॥

८६५ अज्ञात नीतिशास्त्राणामकर्ता शास्त्रकर्मणाम् ।
अभीरुरपवादानां निर्गुण: स्याद्रिपोर्वशे ॥

८६६ स्वपरज्ञानविध्वंसकारणक्रोधसंयुत: ।
विजृम्भत्कामनिचयुक्त: क्षीयेत् सत्वरम् ॥

८६७ स्वारब्धस्यैव कार्यस्य विरुद्धं कुरुते च य: ।
वैरं सम्पाद्यतां तेन साकमर्थं प्रदाय वा ॥

८६८ अगुणी दोषभाङ् मैत्रीं न केनापि स विन्दते ।
तदेव मैत्रीराहित्यं रिपणां जयदं भवेत् ॥

८६९ अज्ञातनीतिशास्त्रार्थैः कार्यसाधनभीरुभिः ।
रिपुर्भियुद्धकर्ता तु जित्वा श्रेष्ठसुखं व्रजेत् ॥

८७० अज्ञातनीतिशास्त्रैस्तु साकं वैरं फलप्रदम् ।
तथा कर्तुमशक्तो यस्तस्य कीर्तिर्न सिध्यति ॥

## अधिकारः ८८.विरोधतत्त्वपरिज्ञानम्

८७१ वस्तुतः परिहासार्थमप्यनर्थप्रदायकः ।
विरोधस्तु न केनापि न कदाचिच्चिकीर्ष्यताम् ॥

८७२ चापाख्यलाङ्गलकरैः वीरैर्वैरं न दुःखदम् ।
वागाख्यलाङ्गलकरैर्बुधैर्वैरं न साम्प्रतम् ॥

८७३ नानाजनविरोधी यो बन्धुमित्रविवर्जितः ।
उन्मत्तपुरुषाच्चापि ज्ञानहीनः स गण्यते ॥

८७४ वैरिणोऽपि सुहृद्भूतान् कुर्वन् श्लाघ्यगुणान्वितः ।
यो भवेत् तत्प्रभावस्य वश्यं स्यात् सकलं जगत् ॥

८७५ एकस्य निस्सहायस्य यद्युभौ तु विरोधिनौ ।
सन्भवेतां तयोरेकं मित्रं कुर्वीत् तत्क्षणात् ॥

८७६ त्वया रिपुर्भवेद् ज्ञातस्त्वज्ञातो वा पुरा भृशम् ।
क्लेशे प्राप्ते तु माध्यस्थ्यभावमालम्ब्य पश्य तम् ॥

८७७ नूत्नमित्रस्य सविधे स्वदुःखं न निवेदयेत् ।
शत्रूणां सन्निधौ स्वीयदौर्बल्यं न प्रकाशयेत् ॥

८७८ स्वसत्त्ववर्धकः कार्यतत्त्वज्ञो निजरक्षकः ।
यदि कश्चिद्भवेत्तस्य शत्रवो लयमाप्नुयुः ॥

८७९ बालकण्टकवृक्षस्य छेदनं सुलभं भवेत् ।
स एव वृद्धश्छिन्नश्चेत् छेत्तुश्छिन्नो भवेत्करः ॥

८८० गर्वो रिपुणामादौ न हन्यते केनचिद्यदि ।
श्वासग्रहणकालं च न शक्यं तेन जीवितुम् ॥

## अधिकार: ८९. आन्तरवैरम्

८८१ रोगप्रदे यदि जलच्छाये त्याज्ये यथा जनै: ।
ज्ञातयो दु:खदास्तद्वत् त्यज्या ह्यान्तरवैरिण: ॥

८८२ असितुल्यान् व्यक्तशत्रून् दृष्ट्वा भीति: कुतो वृथा ।
बन्धुवेषान् गूढशत्रून् दृष्ट्वा मेतव्य मेव हि ॥

८८३ गूढशत्रुभयादात्मरक्षणं युज्यते सदा ।
अन्यथा नाशमाप्नोति सूचीच्छिन्नघटो यथा ॥

८८४ असंस्कृतमनस्केन गूढवैरं भवेद्यदि ।
बन्धुनाशकरान् दोषान् तदा प्राप्नोत्ययं जन: ॥

८८५ बान्धव्यमूलकं गूढवैरं भवेद्यदि: ।
मरणान्तानि दु:खानि लभते तत एव स: ॥

८८६ स्वाश्रितेष्वान्तरं वैरं य: कश्चित्कुरुते यदि ।
न तस्य मरणाभावो भविष्यति कदाचन ॥

८८७ बहिर्यथा ताम्रखण्डौ युक्तौ स्यातां न चान्तरा ।
तथाऽन्त:शत्रवोऽन्योन्यं बहिर्युक्तौ न वै हृदा ॥

८८८ अन्तर्विरोधिनां वंशो बलहीन: क्रमाद् भवेत् ।
अय:पिण्ड: कृपाणेन घृष्टो नाशं व्रजेद्यथा ॥

८८९ स्वल्पमप्यान्तरं वैरं लोके भग्नतिलोपमम् ।
कुलनाशकरानिष्टं महान्तं जनयेत् किल ॥

८९० लोके भिन्नमनस्तत्त्वैर्मानवैस्सह जीवनम् ।
एकत्रैव गृहे सर्पै: सहवाससमं भवेत् ॥

## अधिकार: ९०. महात्मनिन्दानिराकरणम्

८९१ आत्मरक्षासाधनेषु श्रेष्ठं तत् तु प्रकीर्त्यते ।
यत्कार्यसाधनपटो: सामर्थ्यस्य परिग्रह: ॥

८९२ महात्मनां तु विषये क्रियमाणा तिरस्कृति: ।
कस्यचित्सकलं दु:खं प्रददाति न संशय: ॥

८९३ शत्रुनिर्मूलनकृतिमिच्छामात्रेण कुर्वता ।
राज्ञा सह कुरु द्वेषं यदि त्वं नाशमिच्छसि ॥

८९४ समं बलवता वैरं क्रियते यद्धि दुर्बलै: ।
हन्तुर्यमस्य हस्ताभ्यामाह्वानसदृशं हि तत् ॥

८९५ क्रूरसत्त्वसमायुक्तभूपक्रोधवशं गत: ।
आत्मनो रक्षणं तस्मात् कुत्र गत्वा करिष्यति ॥

८९६ दग्धोऽपि वह्निना कश्चित् कदाचिज्जीवितुं क्षम: ।
महातामपकारी तु जीवितुं न भवेत् क्षम: ॥

८९७ महात्मा सुतप:शील: कुप्वेद्यदि महीपतिम् ।
तस्य भूपस्य वित्तेन साम्राज्येनापि किं फलम् ॥

८९८ महद्भि: शैलसदृशै: शप्ता ये भुवि पार्थिवा: ।
स्थिरप्रतिष्ठा: सन्तोऽपि क्षीयन्ते ते सबान्धवा: ॥

८९९ नानाव्रतपरा: सन्त: कुप्यन्ति किल यं प्रति ।
देवेन्द्रो वा भवत्वेष: स्थानाद्भ्रष्ट: पतत्यध: ॥

९०० नानातपोबलवतां प्राप्ता ये कोपपात्रताम् ।
भूपास्ते बलवन्तोऽपि लभेरन् विलयं क्षणात् ॥

## अधिकार: ९१. भार्यानुवर्तनम्

९०१ भार्यावचनकारी न लभते फलमुत्तमम् ।
भार्यानुसरणं लक्ष्यसाधने बाधकं भवेत् ॥

९०२ लक्ष्यमुत्सृज्य कामार्थं भार्यावचनकारिभि: ।
लब्धं वित्तं भवेत्तेषां नूनं लज्जाप्रदायकम् ॥

९०३ आत्मगौरवमुत्सृज्य य: पत्न्यां भीतिमान् भवेत् ।
अतथाभूतमहतामग्रे लज्जां स विन्दते ॥

९०४ भार्याभीरुर्न लभते लोकान्तरसुखं स्थिरम् ।
कार्यनिर्वाहसामर्थ्यं न तस्य श्लाघ्यते बुधै: ॥

९०५ भार्याभीरुर्महात्मभ्यो बहुभ्यश्च निजेच्छया ।
स तु स्वीयधनं चापि दातुं भीतिमवाप्नुयात् ॥

९०६ देवभोगमवाप्यापि नायं प्राप्नोति गौरवम् ।
रम्यहस्तयुतां भार्यां दृष्ट्वा य: कातरो भवेत् ॥

९०७ भार्यायां दास्यकृत्येन जीवतां पौरुषादपि ।
स्त्रीणां लज्जासमेतानां स्त्रीत्वमेव विशिष्यते ॥

९०८ भार्यावचनकर्ता तु स्वमित्रेभ्योऽपि कांक्षितम् ।
न स्यात्पूरयितुं शक्त: कुर्याद्धर्मान् न शाश्वतान् ॥

९०९ धर्मकार्यं तन्निधानवित्तार्जनविधिं तथा ।
काम्यकर्माणि कर्तुं च पत्नीदासो न शक्नुयात् ॥

९१० ऋजुपूतमनस्कानां श्रेष्ठस्थानमुपेयुषाम् ।
पत्नीदास्यकराज्ञानां सर्वथा न भविष्यति ॥

## अधिकार: ९२. पण्याङ्गना

९११ हार्दप्रेम विना वित्तहेतो: प्रीतिं करोति या ।
दास्यास्तस्या रम्यवाक्यं दद्याद् व्यसनमन्तत:

९१२ धनलाभानुसरेण ब्रूवतीनां प्रियं वच: ।
स्नेहं निर्गुणदसीनां विमृश्य विसृजेन्नर: ॥

९१३ पण्यस्त्रीणामर्थहेतो: कृत्रिमालिङ्गनं तु यत् ।
तमोवृतस्थले नूत्नप्रेतालिङ्गनवद्भवेत् ॥

९१४ अर्थमात्रैकलक्ष्यणां दासीनां कपटं सुखम् ।
नाद्रियन्ते धर्ममार्गविमर्शनपरा बुधा: ॥

९१५ स्वभावज्ञानसहिता: शास्त्रज्ञानेन चान्विता: ।
सर्वस्वाम्याङ्गनाभोगं कृत्रिमं न हि वृण्वते ॥

९१६ पण्यस्त्रीणां छलं प्रेम यच्छन्तीनां जनान् प्रति ।
भुजौ रूपमदान्धानां न स्पृशेयुर्गुणैषिण: ॥

९१७ कृत्वाऽन्यं हृदि कायेन यच्छन्तीनां स्वसङ्गमम् ।
वारस्त्रीणां भुजौ चित्तदार्ढ्यहीना: स्पृशन्त्यहो ॥

९१८ कुलटाभिर्वञ्चिकाभि: सहालिङ्गनकर्म तु ।
नृणा विवेकशून्यानां भूतं प्राणहरं भवेत् ॥

९१९ चारित्र्यमात्रशून्यानां दासीनां मधुरो भुज: ।
मूढाधमजनप्राप्यनिरयेन समो भवेत् ॥

९२० द्विमनस्का वारनारी द्यूतो मद्यं मदप्रदम् ।
त्रिभिरेतैर्युतं मर्त्यं विमुञ्चेत् पद्मसम्भवा ॥

## अधिकार: ९३. मद्यपाननिषेध:

९२१ मद्यपानप्रियान् दृष्टा न बिभ्यति विरोधिन: ।
तथा तैरार्जिता कीर्ती: अचिरात् क्षीयते भुवि ॥

९२२ मद्यं न पेयं विदुषा कश्चित् पातुं वृणोति चेत् ।
महाद्भिर्माननीयोऽसौ न कदाचिद्भविष्यति ॥

९२३ जनन्या: पुरतो मद्यपानं क्लेशप्रदं यदि ।
पानं महात्मनामग्रे कियदु:खकरं भवेत् ॥

९२४ अतिहेयसुरपानरूपदोषजुषां पुर: ।
लज्जाख्यरमणी स्थातुमशक्ता दूरतो व्रजेत् ॥

९२५ धनं दत्वा सुरां पीत्वा चोन्मादावस्थया स्थिति:
इतिकर्तव्यतामूढरूपाज्ञानिरूपिका ॥

९२६ ज्ञानाभावान्न भेदोऽस्ति निद्राणस्य मृतस्य च ।
विषपायी सुरापायी द्वामिवौ च तथा समौ ॥

९२७ सुरां रहसि संसेव्य नष्टप्रज्ञान् मदान्वितान् ।
ग्रामीणा हेतुभिस्तत्त्वमूह्य नूनं हसन्ति हि ॥

९२८ सुरां पीत्वापि 'नो पीतं मये ति कथनं त्यज ।
पानमात्रेण चित्तस्थसत्यं किल विनिस्सरेत् ॥

९२९ सुरया स्मृतिहीनस्य ज्ञानदानं सहेतुकम् ।
दीपसाह्यान्नीरमग्रवस्त्वन्वेषणवाद् वृथा ॥

९३० अपीतमदिर: कश्चिद् दृष्ट्वा पानमदान्वितम् ।
'इयं दशा ममापि स्यात् पानेन' ति किं स्मरेत् ॥

## अधिकार: ९४. द्यूत:

९३१ न कुर्याज्जयशीलोऽपि द्यूतं, नश्येज्जितं धनम् ।
मक्ष्याशया मीनभुक्तजलोद्गारसमं भवेत् ॥

९३२ प्राप्यौकांशं शतांशानां त्यक्ता द्यूतोपसेवक: ।
धर्मकामप्राप्तिमार्गं न लभेत कदाचन ॥

९३३ अक्षेण भ्रमणार्हेण लाभार्थं द्यूतकारिभि: ।
सञ्चितार्थस्तथा लाभो रिपूणां सविधं व्रजेत् ॥

९३४ स्वाश्रितानां बहुक्लेशप्रदानात् कीर्तिनाशनात् ।
दारिद्र्यदायकं द्यूतसदृशं नास्ति किञ्चन ॥

९३५ स तु सर्वसमर्थोऽपि भवेन्नूनमकिञ्चन: ।
अक्षं द्यूतस्थलं द्यूतकृत्यं य: सेवते सदा ॥

९३६ दारिद्र्यदेवता द्यूतनाम्नी यं तु समाश्रयेत् ।
इह सर्वसुखैर्मुक्त: स परे नरकं व्रजेत् ॥

९३७ पित्रार्जितधनं तस्य सद्गुणोऽपि विनश्यति ।
द्यूतक्रीडाङ्गणे येन सर्व: कालोऽपि याप्यते ॥

९३८ असत्यभाषणं वित्तनाश: कारुण्यवर्जनम् ।
सर्वनिमाननर्थांश्च द्यूतकर्म प्रयच्छति ॥

९३९ धनविद्यायशोवस्त्रभोजनानां च पञ्चकम् ।
तं विहाय विनिर्याति सेवते द्यूतकर्म य: ॥

९४० असकृन्नष्टत्तोऽपि द्यूतं कुर्याद्यथेपस्या ।
रोगार्तोऽप्यसकृत्तद्वन्मर्त्यो वाञ्छति जीवितुम् ॥

## अधिकार: ९५. औषधम्

९४१ वातपित्तश्लेष्मरूपत्रयाणां विषमां स्थितिम् ।
आयुर्वेददविदो व्याधिशब्देन ब्रुवते बुधा: ॥

९४२ भुक्तं जीर्णमभूद्वेति विमर्शनन्तरं पुन: ।
भुञ्जानस्य शरीरस्य वृथा भवति भेषजम् ॥

९४३ भुक्तेऽन्ने जीर्णतां प्राप्ते भुञ्जान: परिमाणत: ।
चिरं चानेन देहेन कालं नयति मानव: ॥

९४४ भुक्तस्य जीर्णतां बुध्वा बुभुक्षानन्तरं नर: ।
आहारनियमोपेतो भुञ्जियाच्छास्त्रवर्त्मना ॥

९४५ यथाशास्त्रं यथामानं स्वल्पान्नस्य निषेवणात् ।
मर्त्यं प्राणहरो व्याधि: यावज्जीवं न बाधते ॥

९४६ मिताहारपरे सौख्यं शाश्वतं विद्यते यथा ।
नित्यरोगो भवेत्तस्मिन्नमिताहारसेवके ॥

९४७ जीर्णशक्तिमतिक्रम्य यथावदविमृश्य च ।
भूरि भुक्तवतो नानारोगा: प्रदुर्भवन्त्यहो ॥

९४८ रोगतत्वं परामृश्य ज्ञात्वा रोगस्य कारणम् ।
शमनोपायमालोच्य वैद्य: कुर्यान्निवारणम् ॥

९४९ रोगार्तानां वयोमानां कालं रोगप्रमाणताम् ।
आलोच्य वैद्यशास्त्रज्ञ: चिकित्सां सम्यगाचरेत् ॥

९५० रुग्णो भिषग्भेषजं च समये भेषजप्रद: ।
एतच्चतुष्कसंयोगश्चिकित्सोति प्रकीर्त्यते ॥

## अधिकार: ९६. कुलीनत्वम्

९५१ असत्कुलप्रसूतेषु मनुष्येषु स्वभावत: ।
लज्जामाध्यस्थ्यनामानौ स्यातां न सङ्गतौ ॥

९५२ लज्जाचारित्र्यसत्याख्यगुणानां त्रितयं भुवि ।
तिष्ठेत् सत्कुलजातेषु विद्याविरहितेष्वपि ॥

९५३ प्रसन्नवदनं दानमनिन्दा रम्यभाषणम् ।
इतीमे सुगुणा: शुद्धकुलीने सहजा मता: ॥

९५४ अनेककोटिसंख्याकधनलाभकृतेऽपि ते ।
न कुर्यु: सत्कुलोत्पन्ना दोषं कुलविद्यातकम् ॥

९५५ प्रसिद्धसत्कुलोत्पन्नो दारिद्र्येण युतोऽप्ययम् ।
परोपकारकरणान्न कदाचिन्निवर्तते ॥

९५६ 'निर्दुष्टकुलचारित्र्यसहिता: स्याम सर्वदा' ।
इत्थं दृढप्रतिज्ञास्तु निन्दितं न वितन्वते ॥

९५७ महाकुलप्रसूतेषु स्थित: स्वल्पोऽपि दुर्गुणा: ।
व्योमचन्द्रकलङ्केन समं दृश्येत् सुस्फुटम् ॥

९५८ कुलोचितगुणाढ्योपि यो वा प्रीतिविवर्जित: ।
तथाविधे कुलीनत्वसन्देहो जायते नृणाम् ॥

९५९ पूरढाङ्कुरमूलाद्धि भूतत्वं ज्ञायते यथा ।
तथा वाक्यप्रयोगेण कुलं ज्ञायेत कस्यचित् ॥

९६० श्रेयोऽभिलाषिणां लज्जावत्वं नूनमपेक्ष्यते ।
विनीतेन सदा भाव्यं कुलगौरवकांक्षिणा ॥

## अधिकार: ९७. मानम्

९६१ केनचिद्रचितं कार्यं भवेदपि महत्तरम् ।
कुलगौरवनाशाय यदि तत् स्याद्विसृज्यताम् ॥

९६२ पौरुषं यशसा साकं लब्धुमाशासमन्वित: ।
यश:कृते कुलश्रैष्ठ्यघातकं कर्म नाचरेत् ॥

९६३ सम्पत्समृद्धिवेलायां विनय: सर्वदा वर: ।
सम्पनाशे पौरुषं तु वरं स्याद्विनयादपि ॥

९६४ सम्भूता अपि सद्वेशं लोके श्रेष्ठपदच्युता: ।
उत्तमाङ्गपरिभ्रष्टकेशतुल्या भवन्ति ते ॥

९६५ महीधरसमा: सन्त: स्वल्पं गुञ्जाफलोपमम् ।
पतनोन्मुखकार्यं च कुर्वन्तस्ते पतन्त्यध: ॥

९६६ तिरस्कर्तु: पुरोभागे स्थिति: पौरुषमन्तरा ।
नेह कीर्तिं परे स्वर्गं न यच्छेत् किं प्रयोजनम् ॥

९६७ तिरस्कर्तारमाश्रित्य सलाभं जीवनादपि ।
'तदकृत्वा मृतिं प्राप'दिति कीर्तिर्विशिष्यते ॥

९६८ कुलीनत्वं पौरुषं च यदा नाशोन्मुखं भवेत् ।
जीवनं देहरक्षार्थं तदा किं स्वर्गदायकम् ॥

९६९ रोमौकमात्रपतनात् चमरो मरणं व्रजेत् ।
माननाशो प्रसक्ते तु न जीवन्ति कुलोद्भवा: ॥

९७० मानहान्या विनष्टानां मानिनां महितं यश: ।
यशस्य बहुधा लोको मानयेत् पृथिवीतले ॥

## अधिकार: ९८. महत्त्वम्

९७१ लोके कस्यचिदुत्साहो महत्त्वमिति कथ्यते ।
विनोत्साहं जीवनेच्छा महत्वाभाव उच्यते ॥

९७२ तुल्या: स्युर्जन्मना सर्वे किन्तु कर्मविभेदत: ।
महत्त्वतदाभावौ तु भिन्नौ जीवेषु तिष्ठत: ॥

९७३ श्रेष्ठकर्म विन श्रेष्ठकृत्यात् सामान्योऽपि महान् भवेत् ।
विना स्थानां श्रेष्ठकृत्यात् सामान्योऽपि महान् भवेत् ॥

८७४ यस्त्वात्मानं सद्गुणाद्यै: रक्षन् जीवति मानव: ।
महिमानं स विन्देत दृढचित्ता सती यथा ॥

९७५ महत्त्वगुणसम्पन्ना: कर्तव्यं कार्यमुत्तमम् ।
विहितेन पथा कर्तुं भवेयु: शक्तिशालिन: ॥

९७६ "महात्मन: पुरस्कृत्य यामस्तद्गतवर्त्मना" ।
इति न स्यान्मतिर्नीचेष्वात्मश्लाघापरेषु च ॥

९७७ सज्जनार्हमहत्वाख्यगुणो विद्यादिवर्जितम् ।
अस्थानपुरुषं प्राप्य तं कुर्याद् गर्वपूरितम् ॥

९७८ महत्वगुणशीलास्तु भवन्ति विनयान्विता: ।
तद्विहीना निजस्तोत्रकरणैकपरायणा: ॥

९७९ गार्वभावो महत्त्वस्य लक्षणं सति कारणे ।
निष्कारणमहङ्कारवत्ता नीचत्वलक्षणम् ॥

९८० महान्त: परदोषाणां दर्शने विमुखा: किल ।
अधमा: परदोषैकदर्शने नितरां प्रिया: ॥

## अधिकार: ९९. विशिष्टगुणसम्पत्ति:

९८१ युक्तमेतदिति ज्ञात्वा विशिष्टगुणशालिनाम् ।
सहजास्तद्गुणास्तेषां भवेयुरिति शास्त्रिण: ॥

९८२ आन्तरं गुणसौन्दर्यं स्यात्सौन्दर्यं महात्मनाम् ।
बाह्यं शरीरसौन्दर्यं न सौन्दर्यपदेरितम् ॥

९८३ उपकारप्रीतिलज्जासत्यदाक्षिण्यमित्यपि ।
गुणा: पञ्च स्तम्भरूपा: श्रेष्ठ्यभारसमावहा: ॥

९८४ अहिंसाधर्ममाश्रित्य तपस्तिष्ठति मुख्यत: ।
परापकारवैमुख्यगुण: श्रेष्ठ्यमुपाश्रयेत् ॥

९८५ कार्यसिद्धिसमर्थानां सामर्थ्यं विनयो मत: ।
शत्रून् स्ववशमानेतुं विनय: कारणं भवेत् ॥

९८६ असामानेषु नीचेषु वर्तनं विनयेन यत् ।
तन्महत्त्वं परिज्ञातुं निकषोपालतां व्रजेत् ॥

९८७ अपकर्तुर्नरस्यापि साह्यं न क्रियते यदि ।
महत्वगुणवत्तपि तदा व्यर्था भवेत् सताम् ॥

९८८ मगत्वरूपसत्त्वेन सहितानां महात्मनाम् ।
लब्धं दारिद्र्यमप्येषां नापकर्षाय जायते ॥

९८९ महत्वगुणरूपाब्धितीरतुल्यो महान् भुवि ।
प्राप्ते प्रलयकालेऽपि शौथिल्यं न हि विन्दते ॥

९९० महात्मनां महत्वाख्यगुणो यदि लयं व्रजेत् ।
सुविशाला मेदिनीयं भारं वोढं न शक्नुयात् ॥

## अधिकार: १००. अनुसृत्य प्रवर्तनम्

९९१ सौलभ्येन समै: साकमनुसृत्य प्रवर्तनात् ।
विशिष्टगुणसम्प्राप्ति: सुलभेति सतां मतम् ।

९९२ प्रेम्णा प्रवर्तनं शुद्धविख्यातकुलजन्म च ।
द्वयमेतन्महत्वाख्यगुणं यच्छति कस्यचित् ॥

९९३ जनै: साकं देशसाम्यान्न भेदनुवर्तनम् ।
गुणेन साम्यमेभिस्तु भवेच्छन्दानुवर्तनम् ॥।

९९४ नीतिधर्मसमेतानां परोपकृतिशालिनाम् ।
महात्मनां गुणं लोका: प्रशंसन्ति मदान्विता: ॥

९९५ परिहासेऽप्यन्यनिन्दाकरणं दु:खमावहेत् ।
परानुसरणादज्ञा भवन्ति सुगुणान्विता: ॥

९९६ विशिष्टगुणिनां सत्त्वाल्लोकोद्यापि प्रवर्तते ।
तदभावे प्रपञ्चोऽयं भुवि मग्नो भवेत् किल ॥

९९७ सज्जनार्हगुणैर्हीना: तीक्ष्णासिसमशेमुषीम् ।
लब्ध्वापि पादपसमा मन्यन्ते मानवै: समै: ॥

९९८ विना मैत्रीं विरोधं च कुर्वतां विषयेऽपि य: ।
गुणवान्न प्रवर्तेत् दोषयुक्त: स गण्यते ॥

९९९ स्नेहतत्त्वं समालम्ब्य प्रवर्तनमजानताम् ।
दिवसोऽपि प्रभायुक्तो दृश्येत् तमसावृत: ॥

१००० निर्गुणेनार्जितं वित्तं नोपयोगकरं भवेत् ।
यथा स्यात् पात्रदोषेण पयो माधुर्यवर्जित: ॥

## अधिकार: १०१. निरर्थकं वित्तम्

१००१ अभुक्त्वा स्वार्जितं वित्तं गृहपूर्णं सुपुष्कलम् ।
मृतिं प्राप्तवतस्तस्य किं वित्तेन प्रयोजनम् ॥

१००२ 'वित्तेन साध्यते सर्वमि'ति बुद्धया ह्युपार्जितम् ।
यो न दद्याद् ज्ञानशून्य: स नीचं जन्म विन्दते ॥

१००३ धनार्जनैकलक्ष्या ये कृत्वा दानादिसत्क्रियाम् ।
नार्जयन्ति परां कीर्तिं भारायन्ते भुवस्तु ते ॥

१००४ सर्वैरस्पृहणीयस्य दानकृत्यमजानत: ।
किं वावशिष्यते तस्य मरणानन्तरं भुवि ॥

१००५ दानं परेभ्य: स्वेनापि भोगश्चेत्युभयं नृणाम् ।
यदि न स्यात् कोटिसंख्यधनपुञ्जेन किं फलम् ॥

१००६ सत्पात्रदानरूपेण गुणेन रहितो नर: ।
स्वयं भोक्तुमनिच्छंश्च रोग: स्यात् स्वीयसम्पदाम् ॥

१००७ अदत्वैव दरिद्रेभ्यो रक्षितं केनचिद्धनम् ।
अनूढसुन्दरीप्राप्तवार्धकेन समं भवेत् ॥

१००८ ग्राममध्ये फलै: पूर्णो यथैव विषपादप: ॥

१००९ अभुक्त्वैव स्वयं धर्मकृत्वा प्रीतिमन्तरा ।
रक्षितं केनचिद्वित्तं लब्ध्वान्य: सुखमाप्नुयात् ॥

१०१० वृष्टमेघ: पुनर्नीरलाभाद् वृद्धिं यथाश्नुते ।
समृद्धनां च दारिद्र्य तथा तात्कालिकं भवेत्‌ ॥

## अधिकार: १०२. लज्जशीलता

१०११ अकृत्यकरणोत्पन्नलज्जा लज्जेति कथ्यते ।
नारीणां सहजा लज्जा ततो भिन्नैव दृश्यते ॥

१०१२ अन्नं वस्त्रं तथान्यानि समानि स्युर्नृणां भुवि ।
सतां लज्जाविशिष्टत्वं विशेषगुण उच्यते ॥

१०१३ यथा शरीरमालम्ब्य वर्तन्ते जीवराशय: ।
लज्जामाश्रित्य वर्तेत् महत्वाख्यगुणस्तथा ॥

१०१४ लज्जैवाभरणं लोके गुणज्ञानां महात्मनाम् ।
गभीरगमनं तेषां लज्जाभावे न शोभते ॥

१०१५ अन्यै: प्राप्तापवादं च स्वेन प्राप्तमभूदिति ।
मत्वा यो लज्जते लज्जास्थानं तं मन्यते जन: ॥

१०१६ निजात्मरक्षणोपायलज्जामप्राप्य सज्जना: ।
विपुलां पृथिवीं चापि लब्धुं नेच्छन्ति सर्वदा ॥

१०१७ लज्जायुता नरा: प्राणान् लज्जार्थं विसृजन्त्यपि ।
प्राणरक्षाकृते लज्जां न मुञ्चन्ति कदापि ते ॥

१०१८ यदीयकृत्यं दृष्टान्ये भवेयुर्व्रीडयान्विता: ।
स्वयं न लज्जितो भूयात् तं धर्मो व्रीडया त्यजेत् ॥

१०१९ चारित्रहानि: कस्यापि नाशयेत् कुलगौरवम् ।
कस्यचित् सकलं श्रेयो लज्जाभावो व्यपोहति ॥

१०२० लज्जाहीनमनस्कानां प्राणेन सह जीवनम् ।
सूत्रबद्धचलद्दारुप्रतिमातौल्यमावहेत् ॥

## अधिकार: १०३. कुलगौरवक्षणम्

१०२१ "कुलगौरवनिर्माणकृत्याद्भ्रष्टो न चास्म्यहम्" ।
इत्येवं कथनादन्यन्महत्त्वं नास्ति कस्यचित् ॥

१०२२ पूर्णज्ञानप्रयत्नाभ्यां युक्तेनाकुण्ठितेन च ।
कर्मणा कस्यचिद्वंशगौरवं बहु वर्धते ॥

१०२३ वंशौन्नत्यकरे कार्ये सदा प्रयततां नृणाम् ।
बद्ध्वा वस्त्रं दृढं कटतां साह्यं कुर्याद्विधिः स्वयम् ॥

१०२४ स्वकुलौन्नत्यसिद्ध्यर्थं त्वरया यततां नृणाम् ।
विमर्शमन्तरा कार्यं निर्विघ्नं सेत्स्यति क्षणे ॥

१०२५ वंशप्रभावं संरक्ष्य जीवता शास्त्रवर्त्मनि ।
तेन बान्धव्यमिच्छंस्तु लोकस्तमनुवर्तते ॥

१०२६ स्वोत्पन्नकुलनिर्वाहशक्तिं संपाद्य जीवनम् ।
तात्त्विकं पौरुषं ताद्धि पुरुषाणां प्रशस्यते ॥

१०२७ धीरो वहेद्युद्धभारं यथा बहुषु सत्स्वापि ।
शक्तस्तथा वहेद्वंशभारमन्येषु सत्स्वापि ॥

१०२८ कुलगौरवरक्षार्थं कालो नात्र प्रतीक्ष्यताम् ।
आलस्यात् कालकांक्षायां हीयते कुलगौरवम् ॥

१०२९ कुलसंभावितानार्थवारणे यत्नशालिनः ।
शरीरं कस्यचित्किंनु दुःखमात्रैकभाजनम् ॥

१०३० यस्मिन कुले भाविदुःखकुठाराभिहतः पतेत् ॥

## अधिकारः १०४. कृषिकर्म

१०३१ नानाकर्मकरो लोकः कृषिमात्रेण जीवति ।
अतः क्लेशकरं चापि कृषिकर्म प्रशस्यते ॥

१०३२ अन्यकर्मकराणं च समेषां जीवधारणात् ।
जनानां कर्षका: सर्वे तिष्ठन्त्यक्षाणिवद् भुवि ॥

१०३३ जीवतां कृषिकार्येण भवेदुत्तमजीवनम् ।
परान् संस्तुत्य जीवन्त: परे सर्वे पराश्रया: ॥

१०३४ धान्यसम्पत्समृद्धाश्च दयावन्त: कृषीवला: ।
अन्यराज्ञां भुवं स्वीयराजाधीनं वितन्वते ॥

१०३५ कृषिं करेण संवर्ध्य भुञ्जानास्ते कृषिवला: ।
न याचन्ते परान्, किन्तु यच्छन्त्यल्पमथार्थिनाम् ॥

१०३६ कृषिवालानां हस्तास्तु कृषिहीनो भवेद्यदि ।
विरक्तानां यतीनां च जीवनं दुर्लभं तदा ॥

१०३७ कृष्टं पादांशत: शुष्कं कृत्वा बीजस्य पातनात् ।
दोहदं मुष्टिमात्रं च विना भू: स्यात् फलप्रदा ॥

१०३८ कर्षणाद् दोहदं श्रेष्ठं द्वयं कृत्वा ततस्तृणम् ।
निष्कास्य रक्षणाद्भूमे: न मुख्यं जलसेचनम् ॥

१०३९ केदारमनिशं गत्वा स्वामी यदि न पश्यति ।
भूमिरप्रीतिपत्नीव विरक्ता तं परित्यजेत् ॥

१०४० 'दरिद्रा वयमि'त्युक्त्वा कृषिकर्मपराङ्मुखान् ।
तान् समीक्ष्याथ भूदेवो हसेदज्ञानसंयुतान् ॥

## अधिकार: १०५. दारिद्र्यम्

१०४१ दारिद्र्येण समं लोके किं भवेद् दु:खदायकम् ।
इति प्रश्नस्य दारिद्र्यमेवेत्युत्तरमुच्यताम् ॥

१०४२ लभेत् सहवासं यो दारिद्र्याभिधपापिना ।
ऐहिकामुष्मिकसुखं न विन्देत् स मानव: ॥

१०४३ दादिद्र्यसंज्ञिकी त्वाशा यमाश्रित्य वसेन्नरम् ।
कुलश्रैष्ठ्यं च कीर्तिश्च तं विहाय विनि:सरेत् ॥

१०४४ महाकुलप्रसूतानामुत्तमानां वचस्यापि ।
नीचवाक्यप्रयोगाख्यदोषो दारिद्र्यतो भवेत् ॥

१०४५ दारिद्र्यदु:खतप्तानां नृणां तेनैव हेतुना ।
भिन्नभिन्नान्यनेकानि दु:खानि प्रविशन्ति तान् ॥

१०४६ दारिद्रा: शास्त्रतत्त्वर्थज्ञानवन्तोऽपि तद्वच: ।
न कोऽपि श्रुणुयाल्लोके व्यर्थमेव भवेद्वच: ॥

१०४७ अधर्महेतुदारिद्र्यसमाविष्टं नरं भुवि ।
जननी तमुदासीनं मत्वा दूरीकरोत्यहो ॥

१०४८ मरणान्तकरक्रूरदारिद्र्यानुभवव्यथा ।
श्व: पुन: किं भवेद्वेति दरिद्र: चिन्तयेत् सदा ॥

१०४९ कश्चिन्मन्त्रबलादग्नौ सुखं स्वप्तुमपि क्षम: ।
परं दरिद्रावस्थायां स्वप्तुं को वा भवेत् क्षम: ॥

१०५० भोग्यार्थवस्तुरहितदरिद्रा रागवर्जिता: ।
यवागूलवणार्थं तैर्भिक्षुत्वं नाप्यगृह्यत ॥

## अधिकार: १०६. याचना

१०५१ दातुर्दर्शनवेलायां तस्मिन युक्तं हि याचनम् ।
दातुर्नेति वचस्तस्य दोषाय स्यान्न चार्थिनाम् ॥

१०५२ याचको वाञ्छितं वस्तु लभेत् दातरि ।
याचनापि तदा तस्य मोददा न तु दु:खदा ॥

१०५३ वञ्चनातीतचित्तानां धर्मज्ञानां समक्षत: ।
अर्थिनां याचनं चापि नूनं श्रेष्ठ्याय भूयते ॥

१०५४ स्वप्नेऽपि कपटं वाक्यं प्रयोक्तुमविजानत: ।
दातुरग्रे याचनापि दानेन सादृशं भवेत् ॥

१०५५ नेत्यनुक्त्वा स्थितं वस्तु दातुमिष्टस्य कस्यचित् ।
अद्यापि सत्वाद्दातृणामग्रे तिष्ठन्ति याचका: ॥

१०५६ विहाय कपटं तत्त्ववक्तुर्दातुर्हि दर्शनात् ।
याचकानां सुदारिद्र्यदु:खं नश्येत्स्वतोऽखिलम् ॥

१०५७ प्रीतिपूर्वं गौरवेण याचकेभ्य: प्रयच्छत: ।
दातृन् दृष्ट्वा याचकस्तु मनस्यन्त: प्रमोदते ॥

१०५८ याचकानामभावे तु नराणां भुवि जीवनम् ।
सूत्राकृष्टचलद्दारुबिम्बवत् कृत्रिमं भवेत् ॥

१०५९ दातृणामन्तिकं गत्वा दारिद्रा याचका भुवि ।
न याचन्ते यदि तदा महिमा स्यात् कथं प्रभो: ॥

१०६० अर्थिभिर्विजितक्रोधैर्भाव्यं क्षेमार्थिभि: सदा ।
दारिद्र्य स्वगतं स्वस्य भवेद् ज्ञानप्रदायकम् ॥

## अधिकार: १०७. याचनाभीति:

१०६१ कापट्यमन्तरा हर्षपूर्वकं दामकिरणम् ।
अग्रेऽपि याचनाभाव: श्रेष्ठ: कोटिगुणो मत: ॥

१०६२ केषांचिद्याचनावृत्तिमीश: शिरसि चेल्लिखेत् ।
लोककर्ता निर्दयोऽसौ स्वयं भवतु याचक: ॥

१०६३ दारिद्र्य याचनान्नश्येदिति निर्णयकारिणा ।
यत्नशून्येन सदृशो मूर्खो नास्ति व्यथाकर: ॥

१०६४ दारिद्र्यप्राप्तिकालेऽपि याच्ञाकार्यमकुर्वताम् ।
महत्वं सकलां पृथ्वीं समभिव्याप्य राजते ॥

१०६५ स्वप्रयत्नबलावाप्तयवागूजलवस्तुन: ।
पानादप्यधिको मोददायको नास्ति कश्चन ॥

१०६६ पशुरक्षणधार्मार्थं जलयाचनरूपकम् ।
कर्मापि याचनाकर्तु: जिह्वाया दोषदं भवेत् ॥

१०६७ याचनीयं यदि भवेद्दातु: कपटिन: पुर: ।
न कार्या याचनेत्युक्त्वा याचेऽहं याचकान् प्रति ॥

१०६८ दारिद्र्याम्बुधिसन्तारहेतुयाचननाविका ।
कापट्याख्यशिलाभूम्या घर्षिता शिथिला भवेत् ॥

१०६९ याच्ञाव्यसनसंस्मृत्या चित्तं नूनं द्रवीभवेत् ।
कापट्यदोषस्मरणे न द्रवेत्, किन्तु नश्यति ॥

१०७० नेति श्रवणमात्रेण प्राणो गच्छति चार्थिनाम् ।
स्थितेऽपि नेति ब्रुवतां प्राणश्छन्नो वसेत् किमु ॥

## अधिकार: १०८. नीचत्वम्

१०७१ आकारेण समै: साकं नीचानामस्ति तुल्यता ।
इदं साम्यन्त्वन्यवस्तुद्विके द्रष्टुं न शक्यते ॥

१०७२ विवेकज्ञानवद्भ्योऽपि नीचा: स्युर्भाग्यशालिन: ।
यतस्तै: सदसच्चिन्ता कापि न क्रियते किल ॥

१०७३ लोके नीचस्तथा श्रीश इतीमै भवत: समौ ।
स्वेच्छया वाञ्छितं कार्यमुभाभ्यां क्रियते यत: ॥

१०७४ भुवि नीचजना: स्वस्मादपि नीचान् समीक्ष्य तु ।
'तस्मादपि वयं श्रेष्ठं' इति स्युर्ममतापरा: ॥

१०७५ राजदण्डभयान्नीचा भवन्ति गुणशालिन: ।
सच्चारित्रसमेता: स्युस्ते लब्धुं वाञ्छितं क्वचित् ॥

१०७६ श्रुतानेकरहस्यानां स्वयं गत्वा बहुस्थालीम् ।

| | |
|---|---|
| | प्रसारणात् प्रचारार्थपटहा: सन्ति दुर्जना: ॥ |
| १०७७ | बद्ध्वा कण्ठे करं बाधाकारकान् घातकान् विना ।<br>परेषामधमो भुक्तसिक्तहस्तं न दर्शयेत् ॥ |
| १०७८ | दु:खश्रवणमात्रेण सन्त: स्युरुपकारिण: ।<br>नीचा: स्युरिक्षुवत्पिष्टा भवन्ति सहकारिण: ॥ |
| १०७९ | अन्नवस्त्रादिसम्पन्नान् जनानुद्वीक्ष्य याचका: ।<br>असूयया मृषादोषान् सदा शंसन्ति तेष्वपि ॥ |
| १०८० | आत्मानमपि नीचास्तु विक्रेतुं व्यसनागमे ।<br>सज्जा भवेयु:, सत्कर्म नान्यत् तै: कर्तुमिष्यते ॥ |

# भाग–३: काम-काण्ड:

### गान्धर्वविवाहाध्याय

| अधिकार १०९. दर्शनंवितर्कश्च तिरुक्कुरळ् | |
|---|---|
| | |
| १०८१ | रम्यकेशवती चेयं मयूरी किमु देवता ।<br>अथवा मानुषीत्येवं प्राप्नोति मे मन: ॥ |
| १०८२ | मया दृष्टा रमणी यत्पुनर्मां च पश्यति ।<br>सैन्येन सह मां योद्धुं कि प्रापदिति तद्दभौ ॥ |
| १०८३ | अन्तको न मया पूर्वं दृष्ट:, पश्यामि सम्प्रति ।<br>क्रूराक्षश्चाङ्गनारूपो जीवत्येष न संशय: ॥ |
| १०८४ | नारीगुणसमेतायास्तस्यास्ते क्रूरचक्षुषी ।<br>द्रष्टणां प्राणनाशार्थमुद्युक्ते तिष्ठत: सदा ॥ |

| | |
|---|---|
| १०८५ | किं वान्तकः किमु मृगी किन्तु स्यान्नेत्रमेव वा ।<br>त्रयाणामपि सदृश्यं दृष्टयामस्यास्तु दृश्यते ॥ |
| १०८६ | भ्ररस्यास्त्वार्जवं प्राप्य वक्रतां यदि मुञ्चति ।<br>तस्यास्तदा दृष्टिपातं सा नूनं मयि वारयेत् ॥ |
| १०८७ | **प्रङ्गनाधनवक्षाजच्छादक पट्टवस्त्रकम् ।**<br>प्रत्तेभकायसंच्छन्नमुखवस्त्रसमं भवेत् ॥ |
| १०८८ | समरे शत्रुवित्रासहेतुभृतं बलं मम ।<br>रमणीरम्यफालेन नूनमासीत् पराजितम् ॥ |
| १०८९ | हरिणीदृष्टिसदृशदृष्टया प्रकृतिलज्जया ।<br>सहिताया रमण्यास्तु मण्डनैर्मण्डनं वृथा ॥ |
| १०९० | कामो यथा स्वद्रष्टणां विषयोऽपि मुदावहः ।<br>न तथा मदिरा, किन्तु मोदयेत् प्रायिनं परम् ॥ |

## अधिकार ११०. भावपरिज्ञानम्

| | |
|---|---|
| १०९१ | अयास्तु स्वञ्जने नेत्रे दृष्टिद्यसमन्विते ।<br>मह्यं रोगं ददात्येका श्मयत्यपरा तु तम् ॥ |
| १०९२ | तस्याः क्षणिकदृष्टिर्या सकूतं प्रेरिता मयि ।<br>न सा कामार्घभागा स्यात् ततोऽपि महती किल ॥ |
| १०९३ | सा मां ददर्श, दृष्टा सा मया मन्नानानाऽभवत् ।<br>तदेत् प्रेमवृद्धयर्थ रचितं जलसेचनम् ॥ |
| १०९४ | मयि पश्यति सा भूमिं पश्येन्नम्रमुखी स्थिता ।<br>मय्यपश्यति मां दृष्ट्वा कुर्यान्मन्दस्मितं तु सा ॥ |
| १०९५ | यद्यप्योषा न मां साक्षात् पश्यत्यत्र न संशयः ।<br>अथापि मीलिताक्षीव भृत्वा मन्दं हसेदियम् ॥ |
| १०९६ | अप्रीतवाक्यसदृशं ब्रूयात्सा कठिनं बहिः । |

| | |
|---|---|
| | परन्तु हृदये क्रोधो नास्तीति ज्ञायते क्षणात् ॥ |
| १०९७ | वच: क्रूरं निष्कपटमरिवद्दर्शनं च यत् ।<br>तदन्त:प्रीतियुक्तानां लक्षणं प्रोच्यते बुधै: ॥ |
| १०९८ | मयि पश्यति तद् दृष्ट्वा प्रीता मन्दं हसेदियम् ।<br>तस्याश्चलन्त्यास्तत्कृत्य रमणीयं प्राकाशते ॥ |
| १०९९ | उदासीनै: समं बाह्ये यदन्योन्यनिरीक्षणम् ।<br>अन्त: स्थितां प्रीतिमेव तद् व्यनक्ति तयोस्तदा ॥ |
| ११०० | लोके कामुकयोर्नेत्रे यदि प्रेम्णा परस्परम् ।<br>पश्येतां, तर्हि वचसा भाषणे किं प्रयोजनम् ॥ |

## अधिकार १११. सम्भोगसुखम्

| | |
|---|---|
| ११०१ | नासानेत्रश्रोत्रजिह्वाघ्राणत्वक्पञ्चकेन्द्रियै: ।<br>जायमानं भोगमेका ददाति वलयाज्ज्वला ॥ |
| ११०२ | स्वरोगशामकं वस्तु स्वेतरं दृश्यते भुवि ।<br>स्वेनोत्पादितरोगस्य किन्त्वयं भेषजं स्वयम् ॥ |
| ११०३ | प्रियारम्यस्कन्धलभ्यनिद्रासुखसमं सुखम् ।<br>पङ्कजाक्षमहाविष्णोर्वैकुण्ठेऽपि न लभ्यते ॥ |
| ११०४ | कामाग्नि नूतनमिममेषा प्राप्तवती कुत: ? ।<br>योऽग्नि: सन्निहित: शीतो दूरस्थ: प्रदहत्ययम् ॥ |
| ११०५ | वाञ्छितानेकवस्तूनामवाप्त्या यत्सुखं भवेत् ।<br>प्रसूनकुन्तलभरनारीस्कन्धो ददाति तत् ॥ |
| ११०६ | नष्ट: प्राण: पुनर्यस्य स्पर्शमात्रेण जीवति ।<br>तेनामृतेन रचितौ तस्या: स्कन्धाविति ध्रुवम् ॥ |
| ११०७ | स्वगेहे स्वार्जितं चान्यै: विभज्याशनकर्मवत् ।<br>रम्यवर्णाङ्गनाकायपरिष्वङ्ग: सुखावह: ॥ |

| | |
|---|---|
| ११०८ | वायुगम्यस्थलेनापि मध्ये व्यवधिमन्तरा ।<br>प्रीतिकामुकतोरङ्गपरिष्वङ्ग: सुखं वहेत् ॥ |
| ११०९ | विप्रयोग: समाधानं सम्मोग इति तत् त्रयम् ।<br>प्रोच्यते परमं भाग्यं प्रेमलक्ष्यैकजीविनाम् ॥ |
| १११० | असकृद् ग्रन्थपठनादज्ञानं शिष्यते पथा ।<br>अनुस्यूताङ्गनाभोमादमोग: शिष्यते तत: ॥ |

## अधिकार ११२. लावण्यमहिमा

| | |
|---|---|
| ११११ | सुमेषु मृदु त्व हि शिराष! विजया मव ।<br>वत्तोऽपि मार्दवयुता मत्प्रिया, गर्वमुत्सृज ॥ |
| १११२ | निकदृश्ग्टकुसुमसाम्यमस्यास्तु नेत्रयो: ।<br>वस्तीति किं धिया चित्त! दृष्ट्वा पुष्पाणि मुह्यसि ॥ |
| १११३ | देहस्तु चिकुरस्तस्या: चक्षुषी शूलरूपिणी ।<br>मुक्ता दन्ताश्चारुगन्ध: करौ वंशानुकारिणौ ॥ |
| १११४ | अस्यास्तु चक्षुषा साम्यं न लब्धमिति लज्ज या ।<br>नतं कुवलयं भूमिं दश्येद्, दृष्टिं लभेत चेत् ॥ |
| १११५ | मृदुकाये नालयुक्तं सा शिरीपमधारयत् ।<br>नालाभाराद्धग्रमध्यमभूदशुभनादनम् ॥ |
| १११६ | नारीमुखनिशानाथमेदज्ञानविवर्जिता: ।<br>दिवि तारा: स्वप्रदेशाद् भ्रान्ता: किन्तु भ्रमन्त्यहो ॥ |
| १११७ | आदौ नष्टकलश्चन्द्र: पुन: प्राप्नोति य: कला: ।<br>कलङ्कस्तद्गतो नारीवदने किन्तु वर्तते ॥ |
| १११८ | यदि त्वं मुखवत्त्वस्या: शोभां चन्द्र! वहेस्तदा ।<br>मत्प्रीतिपात्रं त्वं मूया: सर्वदा विजयी भव ॥ |
| १११९ | अस्या: कुसुमनेत्राया मुखसाम्यं यदीच्छसि । |

| | |
|---|---|
| | हे चन्द्र! सर्वदृश्यस्त्वं तदा मा तिष्ठ सर्वदा ॥ |
| ११२० | शिरीषकुसमं हंसपक्षौ चेत्युभयं भुवि ।<br>स्त्रीपादमार्दवे दृष्टे नूनं स्यात्यण्टकोपमम् ॥ |
| | |

## अधिकार् ११३. प्रेमप्रभावकथनम्

| | |
|---|---|
| | |
| ११२१ | अस्यास्तु मृदुभाषिण्या: श्वेतदन्तोद्भवं जलम् ।<br>मधुसंमिश्रितं क्षीरमिवातिमधुरं भवेत् ॥ |
| ११२२ | जीवस्य देहसम्बन्धो यादृशो दृश्यते भुवि ।<br>स्नेहबन्धो ममाप्यस्यां वर्तते तादृशो दृढ: ॥ |
| ११२३ | मन्नेत्रकृष्णतारे! त्वं त्यक्त्वा स्थानमितो व्रज ।<br>नो चेन्मत्प्रियया तस्तुमत्र नैव हि शक्यते ॥ |
| ११२४ | संयोगे भूषणाङ्गीयं मम जीवनदायिनी ।<br>वियोगे सैव मे नूनं भवेन्मरणदायिनी ॥ |
| ११२५ | यदि स्युर्विस्मृता लोके क्रूराक्ष्यास्ते च सद्गुणा: ।<br>तदैव स्मरणं युक्तं, न मया विस्मृता गुणा: ॥ |
| ११२६ | नापयाति प्रियो नेत्रान्निमेषसमयोऽपि स: ।<br>नैति खेदं, यतोऽन्येषामदृश्य: सूक्ष्मरूपधृत् ॥ |
| ११२७ | मन्नेत्रस्थो मात्प्रियोऽसौ छन्न: स्यादिति शङ्कया ।<br>अञ्जनाद्यैरलङ्कारो नेत्रयोर्न विधीयते ॥ |
| ११२८ | यष्णवस्त्वशनेनासौ हृदयस्थो मम प्रिय : ।<br>दग्ध: स्यादिति भीत्या, तदुष्णं वस्तु न भुज्यते ॥ |
| ११२९ | नेत्रस्पन्दे कृते नेत्रात् प्रियोऽन्तर्धानमेष्यति ।<br>ज्ञात्वदं निर्निमेषं तं कठिन ब्रुवते जना: ॥ |
| ११३० | हृदयेऽस्ति प्रियो नित्यं तदज्ञात्वा जना भुवि । |

| |
| --- |
| निन्दन्ति, "प्रीतिहीनोऽयं वियोगं बहती" ति च ॥ |
| |

## अधिकार ११४. निर्लज्जात्वकथनम्

| | |
| --- | --- |
| ११३१ | अनुभूय प्रियं पश्चात् वियुज्य बहुखिद्यत्: ।<br>प्रियस्य तालतुरगारोहणान्नास्ति रक्षकम् ॥ |
| ११३२ | वियोगदु:खं सोढुं यौ प्राणदेहौ न शक्नुत: ।<br>तौ लज्जां च परित्यज्य तुरगारे हणोद्यतौ ॥ |
| ११३३ | पुस्त्वलज्जे पुरा पूर्णे मस्यास्तां अद्य ते विना ।<br>करोमि तालतुरगारोहणं कामुको यथा ॥ |
| ११३४ | कामनामातिवेगोऽयं प्रवाहो मयि संस्थितौ ।<br>लज्जापुस्त्वाभिधौ पोतौ वेगेन नयति क्षणात् ॥ |
| ११३५ | सायङ्कालोद्भवं दु:खं कृत्रिमाश्वाधिरोहणम् ।<br>द्वयमेतददान्मह्यं मालाकुलकरा प्रिया ॥ |
| ११३६ | प्रियावियोगान्नो निद्रां लभेते मम चक्षुवी ।<br>तेनार्घरात्रिकालेऽपि कृत्रिमाश्वं स्मराम्यहम् ॥ |
| ११३७ | पयोधिसमकामाधिमनुभूयापि चाङ्गना: ।<br>तालाश्वान्नाधिरोहन्ति स्त्रीजन्मातो विशिष्यते ॥ |
| ११३८ | 'शोच्येयं, धैर्यहीनेय' मित्येतदविचार्य च ।<br>स्त्रीणं कामो विनिष्क्रम्य' विथीपर्गन्तमाययौ ॥ |
| ११३९ | 'एतावता जना: सर्वे जानन्त्मन्तर्हितं न माम्' ।<br>इतीव मम कामोऽयं वीथ्यां भ्रमति मोहित: ॥ |
| ११४० | 'अस्मस्समसखीभिस्तु  न प्राप्तं व्यसनं पुरा' ।<br>**(Text missing)** |
| | |

## अधिकार ११५. अपवादकथनम्

| | |
|---|---|
| ११४१ | कामसम्बन्धिवार्तायाः प्रसाराज्जीव्यते मया ।<br>स्थितिमेनां न जानन्ति जनाः पुष्यवशादहो ॥ |
| ११४२ | दुस्साध्या कुसुमाक्षीयमित्येन्नगरे जनाः ।<br>अज्ञात्वा दुष्प्रचारेण मम साह्यं वितन्वते ॥ |
| ११४३ | दुष्प्रचारो लोककृतो मम साह्यप्रदोऽभवत् ।<br>दुस्साधञ्च सुसाधं मे भविता दुष्प्रचारतः ॥ |
| ११४४ | मम कामः प्रजानां तु प्रचारेण प्रवर्धितः ।<br>कामः प्रचाररहित्ये नूनं सङ्कुचितो भवेत् ॥ |
| ११४५ | प्रचाराद् बहुभिर्ज्ञातः कामः स्यान्मोददायकः ।<br>मोदं मोदं मद्यपायी सेवते तद्यथा पुनः ॥ |
| ११४६ | प्रियो दृष्टस्त्वेकवोरं, अपवादस्तदोत्थितः ।<br>सर्पेण चन्द्रग्रहणवार्तेव प्रसृतोऽभवत् ॥ |
| ११४७ | ववृधे कामरोगोऽयमपवादाख्यदोहदात् ।<br>मातृक्रोधवचोरूपसलिलेनापि पोषितः ॥ |
| ११४८ | दुष्प्रचारेण कामस्य निरोधो न हि शक्यते ।<br>यथा घृतेन वह्नेस्तु शमनं दुष्करं भुवि ॥ |
| ११४९ | दत्वाऽमयवचो मां तु निर्लज्जं त्यक्तवान् प्रियः ।<br>तथा सत्यपवादार्थं न विभेमि कदाचन॥ |
| ११५० | अपवादं ममाभीष्टं ग्रामीणा ब्रुवरे यतः ।<br>कामुकैर्वाञ्छितं सर्व साध्यते तत्तु तैस्ततः ॥ |

## अधिकार् ११६. वियोगसहनम्

| | |
|---|---|
| | |
| ११५१ | वितोगाभावविषयो यदि स्याद् ब्रुहि तन्मम।<br>वियुज्यागमनं चेत्तु वद तत् सहतां नृणाम् ॥ |
| ११५२ | तदीयदृष्टि: पूर्व मे वभूवानन्ददायिनी ।<br>वियोगभीतिं जनयेत् अद्य, जातोऽपि सङ्गम: ॥ |
| ११५३ | स्याद्वियोग: क्वचित साकं विश्वस्तेन प्रियेण च ।<br>तस्मात् प्रियेण रचितां प्रतिज्ञां नैव विश्वसेत्॥ |
| ११५४ | प्रेमपूर्वं न मेतव्य मित्युक्तवापि वियुज्यत: ।<br>प्रियस्य वचनं वक्तुर्दोषाय स्यात्, न श्रृण्वत: ॥ |
| ११५५ | यथा प्रियेण विरहो न स्यात्कार्य तथा त्वया<br>वियोगे प्रथमं प्राप्ते सङ्गमो दुर्लभस्तत: ॥ |
| ११५६ | वियोगविषयं वक्तुं यो भवेन्निर्दय: प्रिय: ।<br>प्रत्यागत्य पुन: प्रीतिं स कथं दर्शयेत् त्वयि ॥ |
| ११५७ | कृशहस्तप्रकोष्ठाभ्यां निस्सृता वलयालय: ।<br>किं नायकवियोगं न कथयेयुर्जनान् प्रति ॥ |
| ११५८ | स्निग्धचेटीविरहतग्रामवासो व्यथाकर: ।<br>प्रियनायकविश्लेषस्ततोऽपि व्यसनप्रद: ॥ |
| ११५९ | अन्तिकस्थितिमात्रेण दहेत् साधारणोऽनल: ।<br>कामरोगसमानोऽयं न दहेद् दूरवत्यपि ॥ |
| ११६० | अङ्गीकृत च विश्लेषमनवाप्य ततो व्यथाम् ।<br>सोढ्वा वियोगं जीवन्त्य: सन्त्यनेका: स्त्रियो भुवि ॥ |

## अधिकार ११७. वियोगदु:खानुभव:

| | |
|---|---|
| ११६१ | लज्जया कामरोगं तु छादयामि, न शाम्यति ।<br>निर्गते निर्गते वारि वर्धते स्त्रोतसो यथा ॥ |
| ११६२ | नैव च्छादयितुं शक्ता कामरोगमहं बलात् ।<br>रोगदात्रे नायकाय वक्तुं  लज्जा तु जायते ॥ |
| ११६३ | खेदं सोदुमशक्तऽस्मिन शरीरे प्राणनामकम् ।<br>यष्टिमालम्व्य लम्बेते लज्जाकामौ तु पार्श्वयो: ॥ |
| ११६४ | कामरोगममाख्य ऽयं महानस्ति पयोधर: ।<br>तत्तीर्त्वा गन्तुमुचितो दृढ: पोतो न विद्यते ॥ |
| ११६५ | सुखप्रदायां मैत्र्यां ये दु:खोत्पादनतत्परा: ।<br>खेदप्रदविरोधस्य निरासे ते कथं क्षमा: ॥ |
| ११६६ | कामो यदा सुखं दद्यात् तत्सुखं सिन्धुवन्महत्।<br>वियोगाद् दु:खदे कामे तद् दु:खं जलधेर्महत् ॥ |
| ११६७ | कामप्रवाहे तीर्णेऽपि पारं मे नैव दृश्यते ।<br>गाढान्धकाररात्र्यां तु वसाम्येकाकिनी ह्महम् ॥ |
| ११६८ | सर्वलोक्जनान् निद्रावशान् कृत्वा तु मां परम् ।<br>सहायं प्राप्य तिष्ठन्ती यामिनी शोच्यतां गता ॥ |
| ११६९ | वियोगकाले यामिन्यो वर्धन्ते या: सुदीर्घत: ।<br>वियुक्तनायकाच्चापि ता: क्ररा: किल भान्ति मे ॥ |
| ११७० | प्रियसामीप्यगमनशक्तिर्नेत्रस्य चित्तवत् ।<br>यदि स्यात् तर्हि मन्नेत्रे न स्यातां सलिलाकुले ॥ |

## अधिकार् ११८. नायकदिदृक्षामूलकखेद:

| | |
|---|---|
| ११७१ | त्वमेव प्रथमं नेत्र! मह्मं प्रियमदशेय: ।<br>कामाधिर्ववृधे तेन कम्मात् त्वं रुदसि वृथा ॥ |

| | |
|---|---|
| ११७२ | अविचार्य पुरा दृष्ट्वा प्रियं प्रीतिपुरस्सरम् ।<br>अद्याज्ञानात् कुतो नेत्रे खिद्येते प्रीतिसंयुते ॥ |
| ११७३ | नेत्रे पूर्व स्वयं गत्वा तं नायकमपश्यताम् ।<br>रुदत: स्वयमद्यात्र, परीहासपदं हि तत् ॥ |
| ११७४ | अनिवार्य कामरोगं शाश्वतं मम चक्षुषी ।<br>मह्यं दत्त्वा क्रन्दितुं ते ह्यशक्ते नीरवर्जिते |
| ११७५ | मन्नेत्रे ये पुरा कामरोगं सागरसन्निभम् ।<br>अयच्छतामिदानीं ते खिद्येते निद्रया विना ॥ |
| ११७६ | कामरोगप्रदाभ्यां मे नयनाभ्यां यदद्य तु ।<br>तुल्योऽनुभूयते खेद: तत्तस्य खलु युज्यते ॥ |
| ११७७ | प्रेम्णा सहर्ष ये नेत्रे प्रियं पूर्वमपश्यताम् ।<br>निर्निद्रे तेऽद्य खेदेन स्यातामश्रुविवर्जिते ॥ |
| ११७८ | हार्द प्रेम विना वाक्यमात्रात् प्रेमदर्शक: ।<br>अस्ति कश्चिददृष्ट्वा तं न नेत्रे शान्तिमापतु: ॥ |
| ११७९ | आगते नायके तद्वत्, अप्राप्तेऽपि च नायके ।<br>नायाति निद्रा तस्मान्मे विषण्णे नयने भृशम् ॥ |
| ११८० | गुह्यप्रकाशपटहतुल्यनेत्रयुता वयम् ।<br>अतोऽस्मन्नयने दृष्ट्वा रहस्यं जना: ॥ |

## अधिकार ११९. वैवर्ण्यमूलकव्यसनम्

| | |
|---|---|
| ११८१ | (Text missing) ङ्गयकारि (Text missing)<br>ततोऽभून्मयि वैवर्ण्य कस्मै तत्कथयाम्यहम् |
| ११८२ | 'नायकेनार्पितं चेदमि' ति सन्तोषहेतुना ।<br>वैवर्ण्य मम देहेऽस्मिन् व्याप्य सर्वत्र वर्तते ॥ |

| | |
|---|---|
| ११८३ | वैवर्ण्य कामरोगं च दत्वा मह्यं स नायकः ।<br>मत्तः सौन्दर्यलज्जे तु प्रत्यगृह्णान्मुदान्वितः ॥ |
| ११८४ | स्मरामि नायकेनोक्तं तद्वीर्य च वदाम्यहम् ।<br>अथापि जातं वैवर्ण्य, न जाने वञ्चनामिमाम् ॥ |
| ११८५ | मम प्रियो मां वियुज्य याति त्वं पश्य तत्र तु ।<br>पश्यात्र सद्यो वैवर्ण्य मम देहमुपागमत् ॥ |
| ११८६ | यथा दीपतिरोधानं प्रतीक्षद्वर्तते तमः ।<br>तथाऽऽलिङ्गनविच्छेदं वैवर्ण्य सम्प्रतीक्षते ॥ |
| ११८७ | परिष्वज्य प्रियं पार्श्वे यदाऽहं परिवर्तिता ।<br>अत्रान्तरे तु वैवर्ण्य मद्देहे व्यापृतं वभौ ॥ |
| ११८८ | 'वैवर्ण्य प्रापदेषे' ति वक्तारः सन्ति भूरिशः ।<br>'प्रियो ययौ वियुज्यैनामि' ति वक्ता न विद्यते ॥ |
| ११८९ | वियोगे सम्मतां मां च योऽकरोत् सोऽपि सत्तमः ।<br>यदि स्यात्तर्हि मद्देहवैवर्ण्यान्नास्ति मे व्यथा ॥ |
| ११९० | वियुक्त मम सम्मत्या प्रियं खिन्न जना यदि ।<br>न निन्देयुस्तदा श्लाघ्या विवर्णेयमिति प्रथा ॥ |

## अधिकार १२०.वियोगव्यसनाधिक्यम्

| | |
|---|---|
| ११९१ | वृतः स्वेन प्रियः स्वां च कामयेद्याद् प्रिया ।<br>बीजावापं विना लब्धफला स्याल्लक्ष्यजीविते ॥ |
| ११९२ | स्वानुरक्तासु नारीषु नायकैः प्रेमदर्शनम् ।<br>जन्तूनां विषये मेघकृतवृष्टिसमं भवेत् ॥ |
| ११९३ | नायकासक्तनारीणां खेदे विश्लेषमूलके ।<br>जातेऽपि सङ्गमो भूयादिति गर्वयुतास्तु ताः ॥ |

| | | |
|---|---|---|
| ११९४ | स्ववाञ्छितप्रियतमो यस्यां प्रीतिं न दर्शयेत् ।<br>अन्येषां स्पृहणीयां च भाग्यहीनां हि तां विदु: ॥ |
| ११९५ | अङ्गनाप्रीतिपात्रं य: कामुक: प्रेम तासु च ।<br>न कुर्यच्चेत् तदा स्त्रीणां किं तैरस्ति प्रयोजनम् ॥ |
| ११९६ | एकपक्षानुरागास्तु जनयेद्व्यसनं महत् ।<br>कामस्तुलाभारसमो द्विपक्षस्थ: सुखप्रद: ॥ |
| ११९७ | रक्तकामुकयोर्मध्ये वसन्नेकत्र केवलम् ।<br>मदीयदु:खवैवर्ण्ये जानीयान्मदन: कथम् ॥ |
| ११९८ | स्वानुरक्तप्रियेणोक्तमश्रुत्वा मधुरं वच: ।<br>वियुज्य भुवि जीवन्त्यो भवन्ति क्लेशभाजनम् ॥ |
| ११९९ | वाञ्छित: कामुक: प्रीतिं मयि नैव करोतु वा ।<br>तत्कीर्तिश्रवणं नूनं श्रवणानन्दं मम ॥ |
| १२०० | प्रेमहीने तु पुरुषे हे चित्त! वदसि व्यथाम् ।<br>न तेन तव लाभोऽस्ति जलधेर्गोपनं यथा ॥ |

## अधिकार 121. अनुभूतसुखं स्मृत्वा रोदनम्

1201 पानकाले परं नृणां मद्यान्मोदप्रदायकात् ।
स्मृतमात्रेण चानन्ददाता कामो विशिष्यते

1202 विश्लेपेऽपि प्रिय: स्वीयप्रियां चित्तं यदि स्मरेत्।
तदेव वारयेत् खेदं, सर्वदा मोदद: स्मर: ॥

1203 क्षुतं प्राङ्निस्सेरदास्यात् स्थगितं तद्भवेत्तत: ।
ज्ञायते तेन मां स्मृत्वा प्रियो व्यस्मरदिप्यपि ॥

1204 वासं करोति मच्चिते सर्वदा प्रियकामुक: ।

तथा तदीयचित्तेऽपि वसामि किमहं न वा? ॥

1205 मम वस्तुं स्वचित्ते न स्थानं यच्छति य: प्रिय: ।
हृदये मम निर्लजं कथं नित्यं वसेदसौ ॥

1206 प्रियेण भुक्तदिवसान् स्मृत्वा जीवामि सम्प्रति ।
तदभावे जीवनं मे सर्वदा दुर्लभं भवेत् ॥

1207 प्रिये स्मृतेऽपि मच्चित्तं दग्धं विश्लेषदु:खत: ।
यद्यहं तं विस्मरेयं न जाने किं भवेदिति ॥

1208 प्रियं स्मराम्यहोरात्रं तदर्थं न स कुप्यानि ।
महोपकारं मन्येऽहमिदं तेन कृतं मम ॥

1209 'आवामभिन्नावि' त्यक्तवा विना प्रेम प्रवर्तते ।
(Text missing.....) तत्कृत्यं (Text missing....)

1210 प्रियो मया सह स्थित्वा वियुज्याद्य जगाम ।
(Text missing .... missing.......) चन्द्रमा: ! ॥

## अधिकार 122. दृष्टस्वप्नकथनम्

1211 प्रियान्देशसहित: स्वप्नो य: समुपागत: ।

निद्रायां तस्य चातिथ्यं कीदृशं करवाण्यहम् ॥

1212 नेत्रे निद्रावशं प्राप्ते स्वप्ने प्राप्तं प्रियं प्रति ।
कथं 'कृच्छ्रेण जीवामी' त्येतद् ब्रूयां विहेषत: ॥

1213 जाग्रद्दशायां यो नैव मयि प्रीतिं व्यधात् प्रिय: ।
स्वप्ने वा दर्शनात्तस्य जीवाम्यत्र कथञ्चन ॥

1214 मयि जाग्रति य: प्रीतिं कामुको नाकरोन्मयि ।
स्वप्नेन स समानीतस्तत्र प्रीतिं करोम्यहम् ॥

1215 जाग्रद्दशायां यद् दृष्टं तदासीत् क्षणिकं सुखम् ।
अद्य स्वप्नगतानन्दो य: सोऽपि क्षणिकोऽभवत् ॥

1216 भुवि जाग्रदवस्थेयं सर्वदा न भवेद्यदि ।
तदा प्रिय: स्वप्नदृष्टो मां वियुज्य न यास्पति ॥

1217 मयि जाग्रति संयुज्य य: क्रूरो नाकरोत् प्रियम् ।
स्वप्नो परं समागत्य मां कुतो व्यथयत्यसौ ॥

1218 मत्स्वप्ने कामुक: प्राप्य स्कन्धमारुह्य वर्तते ।
निद्रान्ते पूर्ववत्सोऽयं मम मानसमाविशेत् ॥

1219 अदृश्यं स्वप्नवेलायां तथा जाग्रद्दशास्वपि ।
प्रियं प्रीतिमकुर्वन्तं स्मृत्वा खेदयुता: स्त्रिय: ॥

1220 'त्याक्तवाऽस्मान् नायक: प्रायादि' ति निन्दन्ति या: स्त्रिय: ।
अविर्भवन्तं स्वप्ने तं न निन्दन्ति हि ता: किमु ॥

# अधिकार 123. सायङ्कालदर्शनेन खेद:

1221 संयुज्याथ वियुक्तानां नारोणां कामुकै: सह ।
प्राणभुग्यमरूपस्त्वं सायङ्काल ! विभासि मे ॥

1222 सायंसन्ध्ये ! अयि भ्रान्ते ! खिन्ना त्वं दृश्यसेऽधुना ।
तव प्रियो मत्प्रियवद् दयाशून्योऽभवत् किमु?

1223 सुशीतला प्रसन्ना या सायं सन्ध्या पुरा बभै ।
सैवाद्य मम नैराश्यमूलकं खेदमातनोत् ॥

1224 प्रिये दूरं गते वध्यस्थलं घातकवत् स्वयम् ।
सायङ्काल: समागत्य मम प्राणान् हरत्ययम् ॥

1225 प्रात:कालेकृते कोऽयमुपकारो मया कृत: ।
सायङ्कालकृते कोऽयमपकारो मया कृत: ॥

1226 कामुकेन यदाऽहं तु न्यवसं प्रेमपूर्वकम् ।
सायङ्कालो व्यथां कुर्योदित्येतन्नाविदं पुरा ॥

1227 कामरोगाख्यकुसुमं प्रात: कोरकतां गतम् ।
मध्याह्ने पक्कतां प्राप्य सायं विकसति स्वयम् ॥

1228 सायङ्कालस्य तीक्ष्णस्य दूतो भूत्वा स्वयं किल ।

गोपहस्तगतो वेणुरायुधात्मा हिनस्ति माम् ॥

1229 चित्तक्षोभकरे तस्मिन् सायङ्काले समागते ।
यथाऽहं तद्वदन्येऽपि ग्रामीणाः खेदमाप्नुयुः ॥

1230 पत्युर्वियोगकालेऽपि स्थिताः प्राणाः, धनात्यये ।
गतं प्रियं विचिन्त्याद्य सायं निर्यान्ति देहतः ॥

## अधिकार 124. अवयवसौन्दर्यहानिः

1231 वियोगखेदं दत्वा मे दूरदेशं ययौ प्रियः ।
तं स्मृत्वा रोदनान्नेत्रे पुष्पैः स्यातां जितेऽधुना ॥

1232 (Text missing.... missing...) करोदिति ॥
वार्तामश्रुनिभान्नेत्रे विवर्णे वदतः किमु ॥

1233 पतिसंयोगसमये स्मन्धौ मोदेन वर्धितौ ।
कृशौ भूत्वाद्य विश्लेषं वोधयन्ताविव स्थितौ ॥

1234 स्कन्धौ नायकविश्लेषात् क्षीणौ शोभाविवर्जितौ ।
तदर्थ क्षीणहस्तभ्यां बभूवुर्वलयाश्च्युताः ॥

1235 स्कन्धौ विभ्रष्टवलयौ हीनशोभौ तथाविमौ ।
निर्दयस्य प्रियस्यास्य काठिन्यगुणमूचतुः ॥

1236 स्कन्धक्षयं ततो भ्रशं वलयानां निरोक्ष्य च ।
प्रियं निन्दन्ति कठिनं जना:, खिन्नस्ततोऽस्म्यहम् ॥

1237 हे चित्त ! भुजयो: कार्श्यं निर्दयाय प्रियाय मे ।
विनिवेद्य ततो जातं महत्त्वं प्राप्यतां त्वया ॥

1238 परिष्यवज्य प्रियं हस्तो यदा तु शिथिलीकृत: ।
तदा वलयहस्ताया: फालमासित्तु निष्प्रभम् ।

1239 आलिङ्गितायां कामिन्यां मध्ये वायुर्विशेद्यदि ।
तस्यास्तदा शीतनेत्रे स्यातां वैवर्ण्यसंयुते ॥

1240 प्रियाया: फालदेशस्थवैवर्ण्यं समुदीक्ष्य तु ।
तदीयनयनाक्रान्तवैवर्ण्यं प्राप खिन्नताम् ॥

## अधिकार् 125. मनस्येव कथनम्

1241 दु:खरूपामयं हन्तुमेकं भेषजमस्ति चेत् ।
हे चित्त ! सम्यगालेच्य न ब्रूया: किन्तु तत्तु मे ॥

1242 कामुके मयि चाप्रीते हे चित्त ! त्वं परं कुत: ? ।
स्मृत्वा तं दु:खमाप्नोषि भ्रान्तस्त्वं विजयी भवा ॥

1243 हे चित्त ! मय्युषित्वा त्वं स्मृत्वा तं खिद्यसे कुत: ।
खेदप्रद: प्रियो मां तु स्मृत्वा नायाति चान्तिकम् ॥

1244 हे मानस ! प्रियं (Text missing) ष्टुं मन्नेत्रे
इमे नेत्रे त्वया साकं नीत्वा गच्छ तदन्तिकम् ॥

1245 कामुको वाञ्छितोऽस्माभि:, अस्मान्नासौ वृणेतु वा ।
हे चित्त ! कथमस्माभिरयं त्यक्तुं हि शक्यते ॥

1246 त्वत्प्रियस्त्वां वियुज्याथ मिलेद्यदि तदा पुन: ।
रतिं न कुरुषे धैर्यात् पश्चात्कुप्यसि हे मन: ! ॥

1247 सच्चित्त ! त्यज कामं वा लज्जां वा त्वं परित्यज ।
तदेतदुभयं सोढुमेकदा नैव शक्नुयाम् ॥

1248 वियोगसमये नाथो नाकरोत् प्रीतिमित्यत: ।
खिन्नस्तमनुसृत्य त्वं चित्त ! यासि कुतो भ्रमात् ॥

1249 मन्मानस ! त्वयि सदा प्रिये तिष्ठति मामके ।
तमन्विष्य बहि: कस्मात् वृथा गच्छसि कुत्र वा ॥

1250 त्यक्त्वाऽस्मान् गतवन्तं तं प्रियं चित्ते निवेश्य ।
स्मृत्वा देह: कृशे भूत्वा शोभाविरहितोऽभवत् ॥

# अधिकार 126. धैर्यहानि:

1251 लज्जारूपार्गलोपेतं कवाटं धैर्यनामकम् ।
कामनामकुठारोऽय भिनत्ति शतधा किल ॥

1252 कामनात्मकवस्त्वेतत्, नूनं दाक्षिण्यवर्जितम् ।
यतो मदीयं चित्तं तद्रात्रावपि नियोजयेत् ॥

1253 काममन्तश्छादयित्तुं मदीयं प्रयते बहु ।
मामतीत्य तु तद्वेगात् निर्याति क्षुतवद्बहि: ॥

1254 धैर्यवानहमित्यासीदद्यावधि मतिर्मम् ।
किन्त्वद्यान्त: स्थित: कामो निष्क्रम्य प्राविशत् सभाम् ॥

1255 प्रियस्य विप्रयुक्तस्य पदानुगमनं विना ।
स्थातुं धैर्येण कामिन्यो न जानन्ति कदापि ता: ॥

1256 मद्गत: कामरोगोऽयमवाच्यमहिमान्वित: ।
विरक्तस्य प्रियस्यानुगमनं मे यतो मतम् ॥

1257 प्रिय: प्रेम्णा समागत्य कुर्यान्न: प्रार्थिनं यदि ।
तर्हि लज्जाभिधं वस्तु नैव ज्ञानं भवेन्मम ॥

1258 स्त्ववर्तिधैर्यसंज्ञाकप्राकारस्य विभेदनम् ।
वञ्चकप्रियनम्रोक्तिरूपसैन्येन शक्यते ॥

1259 प्रिये समागते त्यक्त्वा तमन्यत्नागमं क्रुधा ।
मच्चित्ते तेन संयुक्ते त्वलभे तेन सङ्गमम् ॥

1260 अग्निलग्नवसातुल्यं प्रियलग्नं द्रवेन्मन: ।
तादृक्चित्तयुता नार्यो वियुक्ता: स्यु: कथं प्रियम् ॥

## अधिकार 127. कामुकयोरन्योन्यव्यसनम्

1261 प्रियगमपथं प्रेक्ष्य नेत्रे स्यातं च निष्प्रभे ।
गाताह्नां गणनात् स्त्रीणामङ्गुल्य: क्षीणतां गता: ॥

1262 त्यक्त्वा गतं प्रियं चाहं विस्मरेय यदि प्रिये ! ।
स्कन्धाभ्यां हीनशोभाभ्यां स्त्रस्ता: स्युर्वलयास्तदा ॥

1263 जयैषी धैर्यसाह्येन प्रियो देशान्तरं ययौ ।

अहमद्यापि जीवामि तदागमनकांक्ष्या ॥

1264 'अस्मान् विहाय गतवान् प्रत्येगच्छेत् प्रियोऽद्य स: ।
इति मत्वा मनो वृक्षशाखामास्थाय पश्यति ॥

1265 पश्येयं तु यथेच्छं तं प्रिये प्रत्यागते सति ।
तदा क्षीणभुजाभ्यां तु वैवर्ण्यमपयास्यति ॥

1266 एकदा मां समागच्छेत् मत्प्रिय:, तदनन्तरम् ।
दु:खव्याधिर्यथा नश्येत् पिबेयं तत्प्रभां तथा ॥

1267 नेत्रतुल्य: कामुको मे यद्यागच्छेन्मदन्तिकम् ।
आलिङ्गनमुत त्यागो सम्भोगो वा तदा भवेत् ॥

1268 समाप्तसङ्गरो राजा जयतात् शत्रुमण्डलम् ।
सपत्नीका वयं कुर्म: सायं सन्ध्यामलङ्कृताम् ॥

1269 प्रत्यागन्तुं यद्दिनं तु निर्दिशेत् प्रोषित: प्रिय: ।
वियुक्तायास्तदेकं तु दिनं सप्तदिनं भवेत् ॥

1270 भग्नचित्ता कामुकी सा जीवितान्तं व्रजेद्यदि ।
प्रियागमेन नो लाभ: संश्लेषो वा भवेत् कथम्? ॥

## अधिकार् 128. अभिज्ञाननिवेदनम्

1271 गुप्तेऽपि विषयेऽतीत्य निर्याते तव चक्षुषी ।
अन्तर्गतं रहस्यार्थमचिरान्मम वक्ष्यत: ॥

1272 वंशुतुल्यकरा या तु पूर्णसौन्दर्यशालिनी ।
तस्या प्रियायां लज्जाख्यस्त्रीधर्म: पूर्णतां गत: ॥

1273 आबद्धमणिरन्ध्रान्त:प्रसरत्सूत्रवद् ध्रुवम् ।
प्रियालावण्यमध्येऽपि स्यादभिज्ञानमुत्तमम् ॥

1274 प्रसूनकुट्मलान्त:स्थसौरभेण समं भुवि ।
कामिनीहास्यमध्येऽपि सूचना भाति काचन ॥

1275 मामुद्दिश्य तु कामिन्या सङ्केतो य: पुरा कृत: ।
स तु मद्यसनाधिक्यवारकौषधगार्भित: ॥

1276 प्रेमाधिक्येन चादौ यन्मेलनं, तदित: परम् ।
वियोगमूलकप्रेमत्यागचिह्ननिदर्शनम् ॥

1277 प्रिय: कायेन बद्धोऽपि विश्लेषं मनसा ययौ ।
ज्ञात्वेदं वलया: पूर्व मम हस्ताद्विनिस्सृता: ॥

1278 मां वियुज्य प्रिय: पूर्वदिन एव जगाम स: ।
मत्काये किन्तु वैवर्ण्यमभूत् सप्तदिनात्पुरा ॥

1279 स्वीयस्कन्धौ स्ववलयान् स्वपादौ यद्दर्श सा ।
तदेतद् भाविविश्लेषनिरूप कनिदर्शनम् ॥

1280 कामरोगं स्वनेत्राभ्यामुक्तवा स्त्रीभिश्च याचनम् ।
भवेत् स्त्रीत्वगुणस्यापि स्त्रीत्वधर्मप्रकल्पनम् ॥

## अधिकार 129. संभोगत्वरा

1281 तुष्टिं दर्शनमात्रेण मोदं च स्मरणात् तत: ।
कामार्तो लभते लोके न सुरासेवकस्तथा ॥

1282 तालपादपवत् कामो वृद्धे सति विशेषत: ।
वियिगो यववत्स्वल्पोऽप्यकार्य: कामुकै: सह ॥

1283 वक्कृत्य (Text missing...... missing.........)

अथापि तमदृष्ट्वा मे नेत्रे नावापतुर्मुदम् ॥

1284 वियुज्य तं प्रिय गन्तुमैच्छमादौ सखि प्रिये ! ।
मन्मनस्तत्त विस्मृत्य रन्तुं तेन सहागमत् ॥

1285 प्रिये दृष्टिं गते दोषान् तदीयान् विस्मराम्यहम् ।
अञ्जनालङ्कृतं नेत्रं शलाकां विस्मरेद्यथा ॥

1286 प्रिये दृष्टिपथं याते दोषस्तस्मिन्न दृश्यते ।
प्रियाऽदर्शनवेलायां गुणस्तस्मिन्न दृश्यते ॥

1287 बुध्वापि यत्नवैफल्यं विप्रलंभं करोति सा ।
प्रवाहाकर्षणगुणं ज्ञात्वाऽप्येनं विशेद्यता ॥

1288 सुरापानाद् भवेद्धानिरिति ज्ञात्वापि मानव: ।
हर्षात् पिबेद्यथा तद्वत् तव वक्ष: पुनर्वृणे ॥

1289 लोके कामसुखं पुष्पादपि मादवसम्युतम् ।
बुध्वा तत्त्वमिदं केचित्, लभन्ते फलमुत्तमम् ॥

1290 स्वयं पूर्व समागत्य परिष्वङ्ग च कांक्षती ।
यत्मया संगता तच्च विस्मृत्य कलुषीकृता ॥

## अधिकार् 130. मनसि निर्वेदः

1291 विस्मृत नः प्रियाधीनं वर्तते तस्य मानसम् ।
स्थित्वा त्वं मद्धशे चित्त ! न साह्यं कुरुषे मम ॥

1292 कामुको न वृणोत्यस्मानिति ज्ञात्वापि हे मनः ।
न स कुप्येदिति धिया त्वं प्रयासि तदन्तिकम् ॥

1293 मां विहाय यथेच्छं हि प्रयासि त्वं प्रियं प्रति ।
न सन्ति मित्राण्यार्तानामिति किं मन्यसे मनः ! ॥

1294 विप्रलम्भमकृत्वैव तेन भोगं तु वाञ्छसि ।
चित्त ! को वा त्वया सार्धं विचारं कर्तुमीहते ॥

1295 अप्राप्ते नायके तस्य प्राप्त्यर्थं, प्राप्त्यनन्तरम् ।
वियोगभीत्या चेत्येवं सर्वदा खिद्यते मनः ॥

1296 वियुक्तप्रियदोषाणां स्मरणावसरे सति ।
मां भक्षयति किं चित्तमितीव व्यसनं मम ॥

1297 विस्मर्तु कामुको येन मनसा नैव शक्यते ।
तादृङ्मूढमनोयोगात् लज्जां विस्मृतवत्यहम् ॥

1298 अप्रीतनायकोपेक्षा न युक्तेति विचिन्त्य तु ।
जीवनाशायुतं चित्तं सदा ध्यायति तद्गुणान्

1299 स्वस्य दु:खे समायाते स्वाधीनं स्वीयमानसम् ।
स्वस्मै साह्यं न कुर्याच्चेत् के वान्ये साह्यकारिण: ॥

1300 स्वशस्थं स्वीयचित्तं बन्धुतां चेन्न पालयेत् ।
बन्धत्वपालनाभावो ह्यन्येषां युज्यते किल ॥

## अधिकार 131. विप्रलम्भ:

1301 वियुक्तकामुकप्राप्तदु:खं द्रष्टुमहं वृणं ।
तस्मात् तमपरिष्वज्य वियुक्ता भव मत्प्रिये ! ॥

1302 व्यर्थोऽमितवियोग: स्यात् लवणामितभोज्यवत् ।
मितो वियोग: स्वाद्य: स्यात् मितं च लवणं यथा ॥

1303 वियोगदु:खादुन्मोच्य य: स्त्रियं न परिष्वजेत् ।

दु:खितस्य पुनर्दु:खदात्रा तुल्पो भवेदयम् ॥

1304 गातां स्त्रियं समाश्वास्य मेलनं न क्रियेत् चेत् ।
स्वतो म्लानलतायास्तन्मूलविच्छेदवद्भवेत् ॥

1305 गुणशीलनराणां तु तद्धि लावण्यमुच्यते ।
कुसुमाक्ष्यङ्गनाचित्ते या विश्लेषविशेषता ॥

1306 विना संश्लेषविश्लेषौ काम: स्याद्रसवर्जित: ।
अतिपक्वापक्वफले दृश्येते विरसे यथा ॥

1307 किं संगमसुख पश्चात् स्यान्न वेति विचिन्तनात् ।
सुखमूलवियोगेऽपि दु:खमेकं प्रदृश्यते ॥

1308 अस्मत्कृते प्रिय: खिद्येदिति मत्वापि या प्रिया ।
न खिद्येत्तादृशस्त्रीणां निन्दया किं प्रयोजनम् ॥

1309 छायामाश्रित्य यत् तिष्ठेत् तज्जलं रससंयुतम् ।
प्रेमपूर्णनरै: साकं विप्रलम्भो रसप्रद: ॥

1310 वियोगेन कृशां नारीं यो निराकुरुते प्रिय: ।
तेनापि सङ्गं चित्तमाशया वाञ्छति ध्रुवम् ॥

# अधिकार 132. विप्रलम्भरहस्यम्

1311 त्वद्वक्ष: सकलस्त्रीभि: स्वनेत्राभ्यां यथेच्छया ।
यतो दृष्ट्वाऽनुभूतं तत्, नाहं भोक्तुं वृणे प्रिये ! ॥

1312 दीर्घायुष्मानिति वच: क्षुतादौ कथ्यते जनै: ।
श्रोतुमाशीर्वचो मत्त: प्रिय: क्षुतमथाऽकरोत् ॥

1313 'प्रदर्शनार्थमन्यासां त्वयैतन्मण्डनं कृतम्' ।
इति मालाभूषिताङ्ग प्रियं दृष्ट्वा चुकोप सा ॥

1314 "सर्वस्मादप्यहं प्रीतिविशेषं त्वयि च न्यधाम्" ।
इति प्रियवच: श्रुत्वा का वाऽन्येति चुकोप सा ॥

1315 'इह जन्मनि विश्लेषो न स्यादि' त्यवदं प्रियाम् ।
'भाविजन्मनि विश्लेषो भवेद्वे'त्यरुदत् प्रिया ॥

1316 'त्वं मया तु स्मृते' त्युक्त, 'विस्मृतस्य हि संस्मृति: ।
तेन मां विस्मृतोऽसि त्वमि'ति तत्याज मां प्रिया ॥

1317 क्षुतं कृतं मया, सद्य आशिषं प्राह मां प्रिया ।
'कां स्मृत्वा क्षुतमायात' मिति क्रुद्धा रुरोद सा ॥

1318 'कां त्वां स्मृतवतीत्यंशो न ज्ञात: स्याद्यथा मया ।
तथा कर्तु क्षुतं रुद्रं र्वय'त्युक्त्वा रुरोद सा ॥

1319 वियोगेऽपि समाश्वास्य कृता प्रीता मया प्रिया ।
'स्त्र्यन्तरेऽपि त्वया चेत्थं कृतमि'त्यरुदत् प्रिया ॥

1320 प्रियाङ्गशोभावैशिष्टयं सम्यक्पश्याम्यहं यदा ।
'मय्यीक्षसे कया साम्यमि'ति क्रुद्धयेत् तदा प्रिया ॥

## अधिकार 133. विप्रलम्भसुखम्

1321 निर्दुष्टेन प्रियेणापि विप्रलम्भो भवेद्यति ।
तदस्मासु विशेषण प्रेमाधिक्यप्रदायकम् ॥

1322 विप्रलम्भेन सञ्जातमत्यल्पं व्यसनं भुवि ।
नायकप्रेमविच्छेदकारकं चापि सम्मतम् ॥

1323 जलं भुम्यं यथा शोलष्टं तथा स्निग्धप्रियै: सह ।
जाताद्वियोगादन्य: किं देवलोको भवेदिह ॥

1324 दृढभाविपरिष्वङ्गहेतुविश्लेषकर्मणि ।
मन्मनोभञ्जिका काचित् सेना सञ्जायते किल ॥

1325 अकारणं वियुक्तस्य कामिनीमृदुहस्तयो: ।
स्पर्शभाग्यविहीनस्य हर्ष: काश्चिद् भवेद् ध्रुवम् ॥

1326 कामुकस्य तु विश्लेष: संश्लेषादपि मोदद: ।
भुक्तं जीर्णं सुखं दद्यात् यथा वै भाविभोजनात् ॥

1327 पराजितो विप्रलम्भे य: स्यान म विजयी मत: ।
भाविसंश्लेषवेलायां तत्त्वमेतत् स्फुटं भवेत् ॥

1328 फालस्वेदकरं भोग कृत्वा या सुखमन्वभूत् ।
वियुज्यानया सुख तद्वत् किमह प्राप्नुयां पुन: ॥

1329 विप्रलम्भं पुन: शोभायुतेयं कुरुतात् प्रिया ।
सम्प्रार्थ्य **?**त् कोपशान्त्यै मम रात्रिर्विवर्धताम् ॥

1330 विप्रलम्भात् कामभोग: सुख प्राप्नोति भूतले ।
ततो जाताच्च संश्लेषात् विप्रलम्भ: सुखं व्रजेत् ॥